भविता नमिता न न यामिति याति हय । वियदङ्गणरिङ्गण रङ्गणभूर्विमृशन्निव नर्तनमातनुते ॥ ५ ॥ किमङ्गारवङ्गा खुरे स्पर्शयन्त कुरङ्गा इवाङ्गानि सकोचयन्त । अटन्तो नटन्तो भट तोषयन्तस्तुरगा सुरङ्गा पुर गाहयन्ति ॥ ६ ॥ अलक्षितगतागतै कुलवधूकटाक्षैरिव क्षणात्तनय शीतले प्रणयकेलिकोपैरिव । सुवृत्तमसृणोन्नतैर्मृगदृशा सुरोजैरिव त्वदीयतुरगैरिद धरणिचक्रमाक्रम्यते ॥ ७ ॥ निर्मांस मुखमण्डले परिमित मध्ये लघु कर्णयो स्कन्धे बन्धुरमप्रमाणमुरसि स्निग्ध च रोमोद्गमे । पीन पश्चिम पार्श्वयो पृथुतर पृष्ठे प्रधान जवे राजा वाजिनमारुरोह सकलैर्युक्त प्रशस्तैर्गुणै ॥ ८ ॥ धूलीभिर्दिवमन्धयन्बधिरय न्नाशा सुराणा रवैर्यात सयति खञ्जयञ्जवजये स्तोतॄन्गु णैर्मूकयन् । धर्माराधनसनियुक्तजगता गशामुनाधिष्ठित सौन्दोत्कालमिषाद्विगायति पदा स्पृष्टु तुरगोऽपि गाम् ॥ ९ ॥ वात स्थावरयन्नभ पुटकयन्स्रोतस्वतीं सूत्रयन्सिन्धुं पल्व लयन्वन विटपयन्भूमण्डल लोष्टयन् । शैल सर्षपयन्दिश चपलयँल्लोकत्रय क्रोडयन्हेलारब्धरयो हयस्तव कथकार गिरा गोचर ॥ १० ॥ तथा गामिव सस्पृशन्ति गति-मिर्यामुत्पतन्तो मुहुश्चान्तेवासिन आजवश्रुतगतीवाध्याप यन्तोऽनिलात् । देव स्तीयखुराग्रदीर्णवसुधाधूलीवितानं बला-रातिश्चो नटन पठिष्यति हि वसन्वन्ति वाहास्तव ॥ ११ ॥

## खड्गप्रशंसा

वर्णयामि विमलत्वमम्भस किं त्वदीयकरवालवर्तिन । एति यत्प्रभवमैन्दवीं द्युति विश्वशुक्तिपुटमौक्तिक यश ॥१॥ खड्गवारि भवत किमुच्यते लोलशैवलनिचारिकुन्तले । यत्र राजति निवेशित त्वया राजहसनिवहोपम यश ॥२॥ न पक्षवृत्तिर्न सपक्षवृत्तिर्विपक्षवृत्ति करवालधूम । तथापि ते भूमिपते जगत्या प्रतापवह्निप्रमितिं करोति ॥ ३ ॥ रिपुश्रिय किं कचसचयोऽय प्रतापवह्ने किमु धूमराजि । विलोक्य यत्पाणिगतं कृपाणमेव जनस्तर्कयते रणेषु ॥ ४ ॥ सद्य करस्पर्शमवाप्य चित्र रणे रणे यस्य कृपाणलेखा । तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरण प्रसूते ॥५॥ दर्पान्धगन्धगजकुम्भकपाटकूटसक्रान्तनिघ्नघनशोणितशोण शोचि । वीरैर्व्यलोकि युधि कोपकषायकान्ति काली कटाक्ष इव यस्य करे कृपाण ॥ ६ ॥ धाराधरस्त्वदसिरेष नरेन्द्र चित्र वर्षन्ति वैरिवनिताजनलोचनानि । कोशेन सततमसगतिराहवेऽस्य दारिद्र्यमभ्युदयति प्रतिपार्थि वानाम् ॥ ७ ॥ कुरगाक्ष्या वेणी सुभग विपरीते रतिविधा वधिस्कन्ध दृष्ट्वा किमपि निपतन्तीमरिभट । अधिग्रीव युष्मत्प्रचलकरवालव्यतिकर स्मरन्नेव त्वद्यो विरमति परी रम्भरभसात् ॥ ८ ॥ कृपाणीय काली तव रिपुयश क्षीर मनिशं पिबन्ती व्यालीव प्रथयति तथा दुर्विषहताम् । यथा दूरादस्या स्फुरणमपि सभाव्य सहसा विमुञ्चन्ति प्रौढप्रहरणभृतोऽपि प्रतिभटा ॥ ९ ॥ राजन्वीर विपक्ष लक्ष्मसुवधूवैधव्यदीक्षागुरु सङ्ग्रामाध्वरकर्ममर्मकुशल प्रत्यर्थि पृथ्वीभुजाम् । प्राणानर्ध्यमणेर्मयापहरणं नाकारि किंतु प्रभो भ्रूभङ्गेन तवेति दिव्यमपिबत्कोश स खड्ग पर ॥१०॥ अस्यासिर्भुजग सकोशविवराकृष्ट स्फुरत्कृण्मिा क्रमो न्मीलद्दैरालकीलवलनैस्तेषा भिये भूभुजाम् । सङ्ग्रामेषु निजाङ्गुलीमयमहासिद्धौषधीवीरुध पर्वास्थि विनिवेश्य जाङ्गु लिकता केनोम नालम्बिता ॥ ११ ॥ भूभृन्मौलितटीषु दर्शितसमारम्भोऽयमम्भोधरस्त्वत्खड्ग प्रतिपक्षपङ्कपटल प्रक्षालयन्धारया । युद्धक्रुद्धविरुद्धसिन्धुरगलद्गण्डस्थलप्रस्ख लन्मुक्ताभि करकाभिराशु समरे क्षोणीतले वर्षति ॥ १२ ॥ आश्चर्यं समराम्बरे रिपुयशश्चन्द्रप्रतापार्कयो सर्वग्रासमय सहैव तनुते त्वत्खड्गराहु कथम् । किं चान्यत्परलोकनि र्भय भवास्तस्मिन्महत्युत्सवे गृह्णाति त्यजतामकम्पहृदयो राज्ञा समस्ता भुव ॥ १३ ॥ देव त्वत्करपद्मकोशविगलन्मालिमालमसि वेधव्योद्भटधूमकेतुमपरे त्वद्वैरिवामभ्रुवाम् । वेणीं कालवधो प्रतापहुतभुग्धूम च केचिज्जगुर्मन्ये काल भुजगलोलरसना हालाहलव्यापृता ॥ १४ ॥ सिक्ताया वीर कण्ठस्थलबहलगलद्रक्तधाराम्बुवर्षैर्मोचन्मातंगकुम्भोद्दलनवि लुलितैर्मौक्तिकै पुष्पितायाम् । सङ्ग्रामोद्यानभूमौ तुरगखुर पुटोत्खातकृष्टस्थलाया जातं ते खड्ग-वल्लया फलमतुल रसास्वादहृद्य जयश्री ॥ १५ ॥ सर्पीवैषा कृपाणी तव भुजभुजगासगत सगरादौ सद्य कृत्तारिखण्डच्युतरुधिररजो योगमभ्यावहन्ती । दृप्यद्दानाम्बुपूरोत्कटकरिघटनागण्ड शैलेषु लीना सूते सद्य किलाण्डान्यतिविमलगलद्भूरिमुक्ता च्छलेन ॥ १६ ॥ लेखन्ती व्योमगर्भे दिशि विदिशि मुहु र्निष्पतन्ती हरन्ती शश्वत्प्रौढान्धकारानखिलजनमनोविस्मय

१ अन्तरिक्षचारिणां दृष्टी प्रतिबध्नन्नित्यर्थ २ तत्रत्यान्प्राणिन इत्यर्थ ३ वायोरप्यधिकवेग इत्यर्थ ४ जगतो धर्मैकसाधनकारिणा ५ वेगातिशयत्वान्निरन्तरमूर्ध्वचरणनिक्षेपव्याजात् ६ भुवम्, पक्षे,-धेनुम् 'गोब्राह्मणानलान्भूमिं नोच्छिष्ट न पदा स्पृशेत्' इति निषेधा दिति भाव

१ वक्रविलासा २ प्रकटकुलगतिरित्यर्थ ३ ग्रन्थिम् ४ विषवैद्यता

वर्धयन्ती । यस्य स्फारासिधारा तडिदिव तरला वैरिकण्ठोपकण्ठं प्राप्ता सद्यो नटीव प्रणयकुतुकिनी मोदमाविष्करोति ॥ १७ ॥ चूडापीडाभिरामः स्फुरदुरुमणिभिर्मुद्रिकाकल्पभूतैर्दोर्दण्डः कुण्डलीन्द्रस्तव जयति जगन्मण्डलाधारदृपः । क्षीरश्रेन्यारिकीर्तिं सपदि समुदितां पातुकामः स्फुरत्सर्पजिह्वासुचैः किमेना चपलयति चमत्कारिणीं खड्गधाराम् ॥ १८ ॥

## राजयात्रावर्णनम्

प्रयाणे तव राजेन्द्र मुक्ता वैरिमृगीदृशाम् । राजहंसगतिः पद्मामाननेन शशिद्युतिः ॥१॥ दिङ्नारीणां स्फुरत्कीर्तिरजःसंदूषितास्वम् । प्रस्थाने नृपते सन्तोऽपथ्यर्थयन्ति रजोवृताः ॥ २ ॥ त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥ ३ ॥ यात्रासु यस्य ध्वजिनीभरेण दोलायमाना सकला धरित्री । आर्द्रप्रणाविद्धितपृष्ठपीठमकर्मठं कूर्मपतिं चकार ॥ ४ ॥ अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि । कुर्वन्ति सामन्तशिखामणीनां प्रेमाप्ररोहास्त्वमयं रजांसि ॥ ५ ॥ यदस्य यात्रासु बलोद्धतं रजः स्फुरत्प्रतापानलधूममञ्जितम् । तदेव गत्वा पतितं सुधाम्बुधौ दधाति पङ्कीमयदङ्कतां विधौ ॥ ६ ॥ त्वय्यागते किमिति वेपत एष सिन्धुस्त्वं सेतुमन्थकृद्धतः किमसौ बिभेति । द्वीपान्तरेऽपि न हि तेऽस्त्यवशंवदोऽद्य त्वां राजपुंगव निषेवत एव लक्ष्मीः ॥ ७ ॥ त्वयि प्रचलति प्रभो तुरगवल्गनासु स्फुरद्बलावलयधूलिभिः सकलमेव कीर्णं नभः । दिवाकरहयावली निरवलम्बसंचारतः श्रमापनयनाय किं वसुमतीयमूर्ध्वं गता ॥ ८ ॥ चोली चोलीं न तु कलयते गुर्जरी जर्जराङ्गी भूर्जाकान्तं विशति विपिनं मालवी सालवीथिम् । नो संगीतं रचयति मनागङ्गवृङ्गी कृशाङ्गी नाङ्गी रागं रहसि तनुते भूपते त्वत्प्रयाणे ॥ ९ ॥ देव त्वद्विजयप्रयाणविलसत्सद्वाजिराजिव्रजक्षुण्णक्ष्मातललीनपांसुपटलव्याप्तोऽनिमेषेक्षणः । मुंग्रामा बहु मन्यते फणिपतिं पातालमूलस्थितं सोऽप्युद्दामकरीन्द्रदुर्धरभरक्लान्तः सहस्रेक्षणम् ॥१०॥ देवे दिग्विजयोद्यते धृतधनुर्मैत्यर्थिसीमन्तिनीवैधव्यव्रतदायिनि प्रतिदिशं क्रुद्धे परिभ्राम्यति । आस्तामन्यनितम्बिनी रतिरपि प्रायो न पौष्पं करे भर्तुर्धर्तुमदामदान्धमधुपालीलीनिचोलं धनुः ॥ ११ ॥ देव त्वद्विजयोद्यमे हरिरिसुरश्वोतक्षतक्ष्मातलाप्रोद्भूते रजसः पराणपटले दिक्चक्रमाक्रामति । अक्ष्णां पङ्क्तिशतानि निन्दति निजं हस्तद्वयं निन्दति स्वां निन्दत्यनिमेषतां परिपतद्बाष्पाम्बुधारो हरिः ॥ १२ ॥ युष्मद्वाजिजिताजिराजिचरणक्षेपक्षतैर्मेदिनी मङ्क्षु क्षोणिमनेश्य सिश्चति धनैर्मर्ता नदीनां जलैः । आशामण्डलमुत्कटध्वजपटैर्वानं तनोति द्रुतं चञ्चच्चञ्चलरेणुराश्विनमिवानेतुं दिवं गच्छति ॥ १३ ॥ धूर्ताधीरेण देव वासवकरी पङ्केन लिप्तः कथं नीतः स्वर्गतरंगिणीजलमसौ तत्रास्ति पङ्कः कुतः । सर्वाशाविजयोत्सवं प्रति कृतोद्योगे धराधीश्वरे स्फायन्ते करिकर्णतालपवनोद्धूताश्वमूरेणवः ॥ १४ ॥ देव त्वद्गजवाजिपत्तिपटलप्रोद्धूतधूलीभरैराकाशं वसुधायते खेचरः सोमायते निष्प्रभः । किं चावो भरकुञ्चितः फणवतां नाथः स कूर्मायते कूर्मो भोगिपतीयते किमपरं रात्रीयते वासरः ॥ १५ ॥ वेल्लत्पक्षति राजहंसयुवतित्रुट्यन्मृणालावलिभ्राम्यत्पट्पदभूरिझाङ्कृतिपतच्चक्रीकृतक्रेङ्कृति । पर्यस्तत्रपसंहति पतद्विभ्वर्तिविंगस्थिति प्रस्थानध्वजवातलोलमजनि स्वर्गापगायाः पयः ॥ १६ ॥ सत्यं त्वं पुरुषोत्तमोऽसि नियतं तत्रापि रामो भवान्प्रस्थाने तव लज्जयेव नमति व्यक्तं यतो मेदिनी । द्राक्पूर्वाचलपश्चिमाचलकुचावावृण्वती प्रोच्छलद्ढक्कारावचलत्पयोधिलहरीचेलाञ्चलैश्चञ्चलैः ॥ १७ ॥ प्रस्थाने तव भूमिपाल वसुधा जाता रजोदोषला त्वद्विद्दारपयोधरोऽश्रुनवृतं वर्षत्यघोऽशूदकम् । शश्वाश्वासहिमापमौक्तिकगणान्वामाः किरन्ति द्विषत्पत्नचोत्पात इति प्रतापदहने यासन्ति ते शत्रवः ॥ १८ ॥ एतद्दत्तासिघातस्रवदसृगसुहृ-

१ राजकुमाराः. २ सेतुश्च मन्थश्चेति. ३ इन्द्रः. ४ शम्बरः. ५ यदि मम मर्ता कामो धनुर्धारयिष्यति तदायं राजा मद्भर्तारं धनुर्धरत्वाद्धनिष्यतीति मयास्त्वमत्रा धनुर्नाग्राह्यदिति भावः.

१ अश्वाः. २ समूहः. ३ दग्धशतानि. ४ यतद्विशाद्रजः समुच्छ्रितं येन तस्य सहस्रनेत्राणि तिरोहितानि बभूवुस्तेन यदि मम नेत्रसहस्रं नाभविष्यत्तदा चैनावद्रजोनिकरस्तत्र नापतिष्यदतो नेत्रसहस्रं मम किमर्थममवदिति. ५ सत्यपि नेत्रसहस्रे तत्तिरोधानाय यदि हस्तसहस्रमप्यभविष्यत्तदा हस्तैः सर्वनेत्राच्छादनं कर्तुं शक्यमतो मम पाणिद्वयं व्यर्थमेवेति. ६ यतो मया देवत्वादनिमेषता एक्ष्मपातनाभावः किमिति प्राप्तः यस्माच्चक्षुषा रजःपटलाक्रान्तत्वमभूयदि च मे नयनेष्वनिमेषता नाभविष्यत्तदा रजःपातोऽपि नाभविष्यदतः स्वामनिमेषतां निन्दतीति भावः. ७ रजःकणसंसर्गात्परिपतन्ती निर्गच्छन्ती नेत्रेभ्यो बाष्पाम्बुधारा-श्रुजलप्रवाहो यस्य सः. ८ इन्द्रः. ९ अश्विनीकुमारं वैद्यम्. १० वाहनम्. ११ त्वदादिन्येनावती विपुलातीयचत्तसंमर्दाद्द्वाकादामपि रजोमयं बभूवेति भावः. १२ चन्द्रांशुः. १३ यथा कूर्मः स्वं शरीरं संकोचयति तथा शेषोऽपि त्वदादिनीभरेण संकुचितशरीरोऽभूदिति भावः. १४ संकुचितशरीरोऽपि प्रलम्बकायोऽभूदित्यर्थः. १५ यतस्त्वाद्गजत्वदादिन्या धूलीपटलं समुच्छलितं येन दिनमप्यन्धकारवशाद्रात्रिरिवाभवदिति भावः. १६ चक्रवाकी.

द्वंद्वसान्द्रेन्धनैतद्दोरुद्दामप्रतापज्वलदनलमिलद्धूमभूमभ्रमाय । एतद्दिग्जैत्रयात्रासमसमरभर पश्यत कस्य नासीदेतन्नासीरवाजिव्रजखुरजरजोराजिराजिस्थलीषु ॥ १९ ॥ तत्तद्दिग्जैत्रयात्रोद्धुरतुरगखुराग्रोद्धतैरन्धकार निर्वाणारिप्रतापान लजमिव सृजत्येष राजा रजोभि । भूगोलच्छायमायामयगणितविदुन्नेयकायो भियाभूदेतत्कीर्तिप्रतानैर्विधुभिरिव युवे राहुराहूयमान ॥ २० ॥ गान्धारा गुप्तदारास्त्वयि चलति गलद्वाष्पधारा विहारा रागत्रासान्वगारा क्षितिपकुलमणे गुर्जरा जर्जराशा । तैलङ्गास्त्यक्तलिङ्गास्त्रिभुवनतिलक त्रिश्य दङ्गा कलिङ्गा मोरङ्गा मुक्तरङ्गा सपदि समभवन्वीर गङ्गाविहङ्गा ॥ २१ ॥ काचित्कीर्णा रजोभिर्दिवमनुविदधौ मन्दवक्त्रेन्दुलक्ष्मीरश्रीका काश्चिदन्तर्दिश इव दधिरे दाह सुद्भ्रान्तसत्त्वा । भ्रेमुर्वात्या इवान्या प्रतिपदमपरा भूमिवत्कम्पमाना प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्थशंसु ॥ २२ ॥ जाने युष्मत्प्रयाणे क्षितितिलक रजोयोगदोषादशेषा दिग्योषा स्नान्ति सद्यस्त्वदरिनृपवधूनेत्रनीराप गासु । सगम्य त्वत्प्रतापैस्तदनु किमु दधुर्दोहनं देव तासा प्राची प्रात प्रसूते यदियमुरुमहोऽखण्डमार्तण्डबिम्बम् ॥२३॥ घूर्णन्ते तूर्णमेतत्कुलधरणिभृतो दिग्द्विपा दिग्विदिक्षु क्षुभ्यन्ति क्षोभयन्ति क्षितिमतिमृदितो मर्मणा कूर्मराज । प्रस्थाने यस्य गर्जत्करटिघनघटासभ्रमन्यच्चदुर्वीमुर्वी दर्वीकरेन्द्र कलयितुमुदितश्चायमार्तिं बिभर्ति ॥ २४ ॥ नृत्यत्त्वद्वाजिराजिप्रसरखुरपुटप्रोद्धतैर्धूलिजालैरालोकालोकभूमीधरमतुलनिरालोकभावं प्रयाते । विश्रान्तिं कामयन्ते रजनिरिति धिया भूतले सर्वलोका कोका क्रन्दन्ति शोकानलविक्लतया किं च नन्दन्त्युलूका ॥ २५ ॥ इन्द्र प्रक्षुब्धचित्तो दिशि दिशि सकलान्दिक्पतीन्सावधानान्कुर्वन्वज्राच्छपाणि सुरवरवलिता देवसेना निगृह्य । स्वर्गद्वारे यदीयोद्धतबलनिहतप्रौढढक्कानिनाद श्रुत्वा तिष्ठन्प्रकम्पत्कुचकलशतटीकिंनरीगीयमान ॥ २६ ॥ आजौ त्वद्वाजिराजिप्रखरखुरतरन्यासलीलाभिरुर्व्या दीर्णाया देव निर्यद्विरलमवनीपाल पातालवह्नि । अश्रीयाद्भिश्चमेव प्रतिनृपतिवधूनेत्रधाराम्बुधारावारा यद्येनमारादरिकुलदमन द्राङ् न निर्वापयेयुः ॥ २७ ॥

### पताका

भयेन कृष्णान्यरुणानि रागात्पाण्डूनि कान्तादिवियोगभाजाम् । द्विषा मनासि ध्वजकैतवेन लोलानि मोत्त्वा नृप सध्रयन्ति ॥ २८ ॥

१ वेगव २ सेनामुखम् ३ रणभूमिषु ४ उच्छृङ्खल ५ कपटम् ६ गणितशास्त्रैकवेद्य ७ ज्योतिःशास्त्रप्रमाणक यद्राहोर्भूच्छायात्मक तदेतत्कीर्तिचन्द्रभियेत्युत्प्रेक्षा

### दुन्दुभिः

गङ्गाम्भसि सुरत्राण तव नि साणनि स्वन । स्नातीवारिवधूवर्गगर्भपातनपातकी ॥ २९ ॥ ब्रह्माण्ड प्रविखण्डय भूधरगुहासुप्तान्हरीन्बोधयन् गर्भान्वैरिवधूजनस्य नृपते निष्पातय हा पातकी । कीलालं परिशोष्य च प्रतिभटाना तेजसा तेऽद्भुत शोद्धुं विष्णुपदं स्पृशत्यधिपयोराशि प्रतो दुन्दुभि ॥ ३० ॥ पौरीन्द्राणा धुरीणैरवनिधरगुहागर्तत प्रोच्छलद्भि स्वापभ्रशपराधप्रचलितनयनप्रान्तमाकर्ण्यमान । त्वत्प्रस्थानान्तरुद्यत्प्रलयजलधरध्वानधिक्कारधीरो धृष्टक्षीराम्बुतीरो जगति विजयते दुन्दुभिद्वन्द्वनाद ॥ ३१ ॥

### गवाक्षविलोकनम्

आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्य । बद्धुं न सभावित एव तावत्करेण रुद्धोऽपि च केशपाश ॥ ३२ ॥ प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव । उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्का पदवीं ततान ॥ ३३ ॥ विलोचन दक्षिणमञ्जनेन सभाव्य तद्वञ्चितवामनेत्रा । तथैव वातायनसंनिकर्षं ययौ शलाकामपरा वहन्ती ॥ ३४ ॥ जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्ना न बबन्ध नीवीम् । नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वास ॥ ३५ ॥ अर्धाचिता सत्वरमुत्थिताया पदे पदे दुर्निमिते गलन्ती । कस्याश्चिदासीद्रशना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥ ३६ ॥ स्तन धयन्तं तनयं विहाय विलोकनाय त्वरया व्रजन्ती । सप्रस्नुता या पदवीं स्तनाभ्या सिषेच काचित्पयसा गवाक्षम् ॥ ३७ ॥ अभिवीक्ष्य सामिकृतमण्डन यतीं कर रुद्धनीविगलदंशुका स्त्रिय । दधिरेऽधिभित्ति पटहप्रतिस्वनै स्फुटमट्टहासमिव सौधपङ्क्तय ॥ ३८ ॥ रभसेन हारपद दत्तकाञ्चय प्रतिमूर्धजं निहितकर्णपूरका । परिवर्तितताम्बरयुगा समापतन्वलयीकृतश्रवणपूरका स्त्रिय ॥ ३९ ॥ व्यतनोदपास्य चरण प्रसाधिकाकरपल्लवाद्रसवशेन काचन । द्रुतयावकैकपदचित्रितावनिं पदवीं गतेव गिरिजा हरार्धताम् ॥ ४० ॥ व्यचलन्विशङ्कटकटीरकस्थलीशिखरस्खलन्मुखरमेखलाकुला । भवनानि तुङ्गतपनीयसंक्रमक्रमणक्कणत्कनकनूपुरा स्त्रिय ॥ ४१ ॥ करयुग्मपद्ममुकुलापवर्जितै प्रतिवेश्म लाजकुसुमैरवाकिरन् । अवदीर्णशुक्तिपुटमुक्तमौक्तिकप्रकरैरिव प्रियरथाङ्गमङ्गना ॥ ४२ ॥ नलिनान्तिकोपहितपल्लवश्रिता व्यवधाय चारु मुखमेकपाणिना । स्फुरिताङ्गुलीविवरनि सृतोल्लसद्दशनप्रभाङ्कुरमजृम्भतापरा ॥ ४३ ॥

१ 'सुलतान' इति पदस्य शोधन सुरत्राण इति २ सिंहानाम् ३ अर्धम् ४ गच्छन्ती

## रणसामग्री

अथोच्चकैर्नरठकोतकधरातनूरुहप्रकरविपाण्डुरद्युति । वलैश्चलच्चरणविधूतमुच्चरद्धनावलीरुदचरत क्षमारज ॥ १ ॥ विषङ्गिभिर्भृशमितरतर क्वचित्तुरगमैरुपरि निरुद्धनिर्गमा । चलाचलैरनुपदमाहता सुरैर्निबभ्रमुश्चिरमध एव धूलय ॥२॥ गरीयस प्रचुरमुखस्य रागिणो रजोऽमवस्थनहितसत्त्वमुत्कटम् । सिसृक्षत सरसिजजन्मनो जगद्बलम्ब तु क्षय मपनेतुमिच्छत ॥ ३ ॥ पुरा शरक्षतिजनितानि सयुगे नयन्ति न प्रसभमसृञ्जि पङ्कताम् । इति ध्रुव व्यवधि पुरात्तमीतय खमुच्चकैरनल्पसखस्य केनत्र ॥ ४ ॥ क्वचिल्लसद्धननिकुरम्बकर्बुर क्वचिद्धिरण्मयकणपुञ्जपिञ्जर । क्वचिच्छरच्छशधरखण्डपाण्डुर खुरक्षतक्षितितलरेणुरुद्ययौ ॥५॥ महीयसा महति दिगन्तदन्तिनामनीकजे रजसि मुखानुषङ्गिणि । विसारितामजिहत कोकिलावलीमलीमसा जलदमदाम्बुराजय ॥ ६ ॥ शिरोरुहैरलिकुलकोमलैरसी मुधा मृधे मृषत मुनान एव मा । बलोद्धत धवलितमूर्धजानिति ध्रुव जनाञ्जरत इवाकरोद्रज ॥ ७ ॥ मुसहतैर्दधदपि धाम नीयते तिरस्कृति बहुभिरसशय परै । यत क्षितेरवयव सपदोऽणवस्त्विषानिधेरपि वपुरावरीपत ॥ ८ ॥ द्रुतद्रवद्रथ चरणक्षतक्षमातलोलसद्बहुलरजोवगुण्ठितम् । युगक्षयक्षण निरवग्रहे जगत्पयोनिधेर्जल इव मग्नमाबभौ ॥ ९ ॥ मसृणमद्दिनकरवक्त्रकान्तयो रजस्वला परिमलिताम्बरश्रिय । दिगङ्गना क्षणमविलोकनक्षमा शरीरिणा परिहरणीयता ययु ॥ १० ॥ निरीक्षितु वियति समेत्य कौतुकात्पराक्रम समरमुखे महीभृताम् । रजस्तताविनिमिषलोचनोत्पलव्यथा कृति त्रिदशगणे पलाय्यत ॥ ११ ॥ निषङ्गिणि प्रतिपदमाविलत्पयो हताचिरद्युतिनि समीरलक्ष्मणि । शनै शनै रचितपङ्कमारिका पयोमुच प्रययुरपेतवृष्टय ॥ १२ ॥ नमोनदीव्यतिकरधौतमूर्तिभिर्वियद्गतैरनधिगतानि लेभिरे । चलच्चमूतुरगखुरहतोत्पतन्महीरज स्नपनसुखानि दिग्गजे ॥ १३ ॥ गजव्रजाक्रमणभरावनम्रया रसातल यदखिलमानशे भुवा । नभस्तल बहुलतरेण रेणुना ततोऽगमत्त्रिजगदिवैकता स्फुटम् ॥ १४ ॥ समस्थलीकृतविवरेण पूरिता महीभृता बलरजसा महागुहा । रहस्त्रपाविधुरवधूरतार्थिना नम सदामुपकरणीयता ययु ॥ १५ ॥ गते मुखच्छदपटसादृशीं दृशा पथस्तिरोदधति घने रजस्यपि । मदानिलैरधिमधुचूतगन्धिभिर्द्विपा द्विपानभिययुरव रहसा ॥ १६ ॥ मदाम्भसा परिगलितेन सप्तधा गजाङ्गनक्षमितरजश्चयानघ । उपर्यवस्थितघनपांसुमण्डलान्गोकयत्ततपटमण्डपानिव ॥ १७ ॥ तूणीरबन्धपरिणद्धभुजान्तरालमाकर्णलम्बिशिखिपिच्छकलापधारि । कोदण्डपाणि निनदत्प्रतिरोधकानामापातदुष्प्रसहमाविरभूदनीकम् ॥ १८ ॥ आदावेव गजेन्द्रमौलिनिलसद्दण्डा पताकावली पश्चाद्वारणराजशेखरशिरोद्दामघोषाश्रिता । उद्दण्डध्वजलाञ्छिता प्यथ घनीभूता रथाना ततिस्तत्पश्चात्तुरगावली विरचिते योधै मम सर्वत ॥ १९ ॥ योधैरेव वशीकृता कथमपि प्रोद्दामरोषान्विता गाढध्वान्तधराधरा इव रणक्षोणी समालम्बिता । ईषन्मीलितघूर्णित प्रतिदिश प्रक्षिप्तनेत्राञ्चला मन्दान्दोलितमौलयो मदजलैरामान्ति दन्तावला ॥ २० ॥ आरूढक्षितिपालमालविगलत्स्वेदाम्बुसेकोद्धता भेरीझाङ्कृतिचापटङ्कृतिचमत्कारोल्लसन्मानसा । क्षुभ्यच्छोणितलस्फुरत्खुरपुट चञ्चलत्केसर मन्दभ्रान्तविलोचन प्रतिनिशि नृत्यन्ति वाजिव्रजा ॥ २१ ॥ अन्यूनोन्नतयोऽतिमात्रपृथव पृथ्वीधरश्रीभृतस्तन्वन्त कनकावलीभिरुपमा संध्याभ्रमिनीदामभि । नर्दन्त शममानयन्नुपलसञ्छृङ्गारलेखासुधा काले कालियकायकान्तवपुष पामूपमाम्भोमुच ॥ २२ ॥ हेषाघोषपहरीणा नितवननिनदद्बृंहितै कुञ्जराणा ज्याघातोत्थैर्निनादै पटुपटहरवैर्मर्दलोद्दामशब्दै । प्राप्ते कर्णोपकण्ठ मदगजनिवहस्कन्धघण्टाप्रणादे शृङ्गाराय स्मरन्ते त्रिदशमृगदृशो वीरवर्गानुरक्ता ॥ २३ ॥ सज्जता कुम्भभित्तिच्युतमदमदिगमत्तभृङ्गा करीन्द्रा युज्यता स्यन्दनेषु प्रसभजितमरुत्कण्डवेगास्तुरगा । कुन्तैर्नीलोत्पलाना वनमिव ककुभामन्तराले सृजन्त पादाता सचरन्तु प्रसभममिलस्तत्पणय पत्तयोऽपि ॥ २४ ॥

---

## रणवर्णनम्

तनुत्राण तनुत्राण शस्त्र शस्त्र रथो रथ । इति शुश्रुविरे विष्वग्भुद्धटा सुभटोक्तय ॥ १ ॥ पत्ति पत्तिमभीयाय रणाय रथिन रथी । तुरङ्गस्थ तुरङ्गस्थो दन्तिस्थ दन्तिनि स्थित ॥ २ ॥ सङ्ग्रामानन्दवर्षिण्णो विग्रहे पुलकाङ्कित । आसीत्कवचविच्छेदो वीराणा मिलता मिथ ॥ ३ ॥ निर्दय खड्गभिन्नेभ्य कवचेभ्य समुच्छितै । आसव्योमदिशस्तूलै पलितैरिव पाण्डुरा ॥ ४ ॥ खड्गा रुधिरसलिप्ता श्चण्डांशुकरभासुरा । इतस्ततोऽपि वीराणा वैद्युत वैभव दधु ॥ ५ ॥ गृहीता पाणिभिर्वीरैर्निकोशा खड्गराजय । कान्तिजालच्छलादाजौ व्यहसन्समदा इव ॥ ६ ॥ खड्गा

---

१ वायोर्धवनभूतानि रजासि २ मा त्रियताम्

१ परिन २ वृद्धत्वनिदर्शकचर्मनिकृति

शोणितसदिग्धा नृत्यन्तो धीरसाशिषु । रजोघने रणेऽनन्ते विद्युता विभ्रम दधु ॥ ७ ॥ शस्त्रभिन्नेभकुम्भेभ्यो मौक्तिकानि च्युतान्यधु । आहवक्षेत्रमभ्युप्तकीर्तिबीजोत्करश्रियम् ॥ ८ ॥ वीराणा विषमैर्घोषैर्विद्रुता वारणा रणे । शास्यमाना अपि प्रासादेर्द्धुर्धूताङ्कुशा दिश ॥ ९ ॥ रणे बाणगणै भिन्ना भ्रमन्तो भिन्नयोधिन । निमग्नज्जर्गलद्रक्तनिमग्नासु महागजा ॥ १० ॥ खड्गनिर्लूनमूर्धानो निपतन्तोऽपि वाजिन । प्रथम पातयामासुरसिना दारितान्नरीन् ॥ ११ ॥ वीराणा शस्त्रभिन्नाना शिरासि निपतन्त्यपि । अधावन्दन्त दष्टोष्ठभीषणान्यरिषु क्रुधा ॥ १२ ॥ शिरासि वरयोधानामर्धचन्द्रहृतान्यपि । आददाना भृश पादे श्येना व्योमशिरे दिश ॥ १३ ॥ उत्क्षिप्ता अपि हस्तीन्द्रै कोपनै पत्तय करै । ते रिपूनहनन्खड्गपातै स्वस्य पुर प्रभो ॥ १४ ॥ उत्क्षिप्य करिभिर्दूर मुक्ताना योधिना दिवि । प्रापि जीवात्मभिर्दिव्याङ्गनाकण्ठपरिग्रह ॥ १५ ॥ कुद्धस्य दन्तिन पत्तिर्जिघृक्षोरसिना करम् । निर्भिद्य दन्तमुसलान्यारुरोह जिघृक्षया ॥ १६ ॥ खड्गेनामूलतो हत्वा दन्तिनोऽङ्घ्रिचतुष्टयम् । अपतिष्णो प्रविष्टोऽपि पदातिर्निरगाद्द्रुतम् ॥ १७ ॥ करेण करिणा वीर सुगृहीतोऽपि कोपिना । असिनास्त्रप्रहाराशु तस्यैव स्वयमक्षत ॥१८॥ तुरङ्गी तुरगारूढ प्रासेनाहत्य वक्षसि । पततस्तस्य नाशासीत्प्रासघात स्वके हृदि ॥ १९ ॥ तुरङ्गसादिन शस्त्रहृतप्राण गत भुवि । आत्राकृष्टोऽपि महावाजी नात्रस्तनयनोऽत्यजत् ॥ २० ॥ द्विषा प्रासहृतप्राणो वाजिपृष्ठदृढासन । हस्तोद्धृतमहाप्रासो भयो जीवन्निवाभ्रमत् ॥ २१ ॥ खड्गेन शितधारेण भिन्नोऽपि रिपुणाश्वग । नामूर्च्छत्कोपतो हन्तुमियेष च पतन्नपि ॥ २२ ॥ रथिनो रथिभिर्बाणैर्हृतप्राणा दृढासना । कृतकार्मुकसधाना सप्राणा इव मेनिरे ॥२३॥ मिथोऽर्धचन्द्रनिर्लूनमूर्धानौ रुषितौ रुषा । खेचरौ भुवि नृत्यन्तौ स्वकबन्धावपश्यताम् ॥ २४ ॥ पत्ति पदाति रथिन रथेशस्तुरंगसादी तुरगाधिरूढम् । य ता गजस्थाप्यपतद्गजस्थे तुल्यप्रतिद्वन्द्वि बभूव युद्धम् ॥ २५ ॥ उत्थापित सर्वति रेणुरश्वै सान्द्रीकृत स्यन्दनवशचक्रै । निस्सारित कुञ्जरकर्णतालैर्नक्रमेणोपरुरोध सूर्यम् ॥ २६ ॥ रथो रथाङ्गध्वनिना विजज्ञे विलोलघण्टाक्वणितेन नाग । स्वभर्तृनामग्रहणाद्बभूव सान्द्रे रजस्यात्मपरावबोध ॥ २७ ॥ आवृण्वतो लोचनमार्गमाजौ रजोन्धकारस्य विजृम्भितस्य । शस्त्रक्षताश्वद्विपवीरजन्मा बालारुणोऽभूद्रुधिरप्रवाह ॥२८॥

१ क्रुधेन २ मुखे ३ नादेन

स च्छिन्नमूल क्षतजेन रेणुस्तस्योपरिष्टात्पवनावधूत । बभार शेषस्य हुताशनस्य पूर्वोत्थितो धूम इवावभासे ॥ २९ ॥ आधोरणाना गजसनिपाते शिरासि चक्रैर्निशितै क्षुराग्रै । हृतान्यपि श्येननखाग्रकोटिव्यासक्तकेशानि चिरेण पेतु ॥३०॥ ततुल्यजा वर्मभृता विकोशैर्द्धस्तु दन्तेष्वभिमि पतद्भि । उदन्तमग्नि शमयाबभूवुर्गजा विविग्ना करशीकरेण ॥३१॥ शिलीमुखोत्कृत्तशिर फलाढ्या च्युतै शिरस्त्रैश्चषकोत्तरेव । रणक्षिति शोणितमद्यकुल्या रराज मृत्योरिव पानभूमि ॥३२॥ केचिद्गदा केऽपि सचापबाणानन्ये कृपाणीमपरे च शूलम् । शक्त्यृष्टिमन्ये मुसल परे च प्रोत्तानहस्ता परिनर्तयन्ति ॥३३॥ सरोषमुद्धाङ्गनमध्यधावन्मत्तद्विपानामधिकोत्सुकानाम् । पादाभिघाताभिहता पतन्ति रथाश्च योधाश्च तुरगमाश्च ॥३४॥ रम्भातरूनुद्धतवातपूरा यथा तथा वारणयूथनाथा । सङ्ग्रामभूमौ विनिपातयन्ति रथाश्च योधाश्च तुरगमाश्च ॥ ३५ ॥ परस्परेण क्षतयो प्रहर्त्रोरुत्क्रान्तवाय्वो समकालमेव । अमर्त्यभावेऽपि कयोश्चिदासीदेकाप्सर प्रार्थितयोर्विवाद ॥३६॥ महासन सैन्यविमर्दसभव कर्णान्तमूलकपतास्पुपेयिवान् । पयोनिधे क्षुब्धतरस्य मन्थनो बभूव भूम्ना भुवनोदरभरि ॥ ३७ ॥ महागजाना गुरुबृंहितै शतै सुहेषितैर्घोरतरैश्च वाजिनाम् । घनै रथाना चलचण्डचीत्कृतैर्हितोहितोऽभूत्पटहस्य नि स्वन ॥ ३८ ॥ घनैर्विलोक्य स्वमितार्कमण्डलैश्चमूरजोभिर्निचित नमस्तलम् । अयाचि हर्षभिमानस घनभ्रमेण सानन्दमनर्ति केकिभि ॥ ३९ ॥ विलोक्य धूलीपटलैर्भृश भृत द्यावापृथिव्योरलमन्तर महत् । किमूर्ध्वतोऽध किमधस्त ऊर्ध्वतो रजोऽभ्युपेतीति जनैरतर्क्यत ॥ ४० ॥ नोर्ध्व न चाधो न पुरो न पृष्ठतो न पार्श्वतोऽभूत्खलु चक्षुषो गति । सूच्यग्रभेद्ये पृतनारजोभरे सुनिर्भर प्राणिगणस्य सर्वत ॥ ४१ ॥ उद्दामदानद्विपबृंहितै शतैर्नितान्ततुङ्गतुरगहेषितै । चलद्ध्वजस्यन्दननेमिनि स्वनैरभूच्चिरुच्छ्वासमथाकुल नम ॥ ४२ ॥ महागजाना गुरुभिस्तु गर्जितैर्विलोलघण्टारणितै रणोज्ज्वलै । वीरप्रभेदै प्रमदप्रमेदुरैर्वाचालतामादधिरेतरा दिश ॥ ४३ ॥ दन्तीन्द्रदानाम्बुधिवारिवीचिभि सद्योऽपि नद्यो बहु ता पुपूरिरे । धरारजोभिस्तुरगक्षतैर्भृत वा पङ्कतामेत्य रनस्थलीकृतम् ॥ ४४ ॥ निम्नप्रदेशा स्थलतामुपागमन्निम्नत्वमुच्चैरपि सर्वत स्थलम् । तुरङ्गमाणा व्रजता खुरै क्षिती रथैर्गजेन्द्रै परित समीकृता ॥ ४५ ॥ नभोदिगन्तप्रतिघोषभीषणैर्महामहीभृत्तटदारणोल्बणै । पयोधिनिर्धूतनकेलिभिर्जगद्बभूव भेरीस्वनितै समाकुलम् ॥ ४६ ॥ इतस्ततो वातविधूतचञ्चलैरारोधिताशागमनैर्ध्वजांशुकै । लघुकर्म

न्हस्ती हृष्टरोमेव रेजे ॥ ७८ ॥ आताम्राभा रोषभाज कटान्तादाशूखाते मार्गणे घूर्गतेन । निश्चोतन्ती नाग राजस्य जज्ञे दानस्याहो लोहितस्येव धारा ॥ ७९ ॥ मुर्वे ज्योत्स्नाविप्रुषा तुल्यरूपस्तारस्ताराजालसारामिव द्याम् । खड्गाघातैर्दारितादतिकुम्भादाभाति स्म प्रोच्छलन्मौक्तिकौघ ॥ ८० ॥ दूरोत्क्षिप्ताक्षिप्रचक्रेण कृत्त मत्तो हस्त हस्तिराज स्वमेव । भीम भूमौ लोलमान सरोष पादे नासृक्पङ्कपेप पिपेष ॥ ८१ ॥ आपस्काराल्लूनगात्रस्य भूमिं नि साधार गच्छतोऽवाङ्मुखस्य । लब्धायाम दन्तयोर्युग्म मेव स्व नागस्य प्रापदुत्तम्भनत्वम् ॥ ८२ ॥ हस्तेनाग्रे वीतभीत गृहीत्वा कश्चिद्व्याल क्षिप्तवानूर्ध्वमुच्चै । आसीनाना व्योम्नि तस्यैव हेतोर्दिव्यस्त्रीणामर्पयामास नूनम् ॥ ८३ ॥ आरम्यैकामग्रपादेन जङ्घामन्यामुच्चैराददान करेण । सांस्थिस्थान दारुवद्दारुणात्मा कश्चिन्म ध्यात्पाटयामास दन्ती ॥ ८४ ॥ उत्फुल्लशारार्धचन्द्रेण लूने वक्रेऽन्यस्य नोधदग्रेष्टदन्ते । सैन्ये कण्ठच्छेदलीने कबन्धाद्भूयो विस्मये वल्गत सासिपाणे ॥ ८५ ॥ प्रत्यावृत्त मग्नभाजि स्वसैन्ये तुल्य शुक्रैरानिरिन्ति स्म कश्चित् । एकौघेन स्वर्णपुङ्खैर्द्विप त सिद्धा मार्ये साधुवादैर्द्वयेऽपि ॥ ८६ ॥ बाणाक्षिप्तारोहशून्यासनाना प्रक्रान्तानामन्यसैन्यैर्ग्रहीतुम् । सरभ्धाना भ्राम्यतामाजिभूमौ वारी वारै सस्मरे वारणानाम् ॥ ८७ ॥ कश्चिन्मूर्च्छामेत्य गाढप्रहार सिक्त शीते शीकरैर्वारणस्य । उच्छ्वास प्रस्थिता त जिघृक्षु र्व्यर्थीकृता नाकनारी मुमूर्च्छ ॥ ८८ ॥ लूनग्रीवात्सायके नापरस्य द्यामत्युच्चैराननादुत्पतिष्णो । त्रेसे मुग्धै सैंहिकेयानुकाराद्रौद्राकारादप्सरोभिर्नचन्द्रै ॥ ८९ ॥ वृत्त युद्धे शूरमाश्लिष्य काचिद्रन्तु तूर्ण मेरुकुञ्ज जगाम । त्यक्त्वा नार्यो देहमेति स्म यावत्पत्नी सद्यस्तद्वियोगासमर्था ॥ ९० ॥ त्यक्तप्राण सयुगे हस्तिनीस्था वीक्ष्य प्रेम्णा तत्क्षणादुद्गतासु । प्राप्याखण्ड देवभूय सतीत्वादाशिश्लेष स्वैर कश्चित्तु रश्री ॥ ९१ ॥ स्वर्गे वास कारयन्त्या चिराय प्रत्यग्रत्र प्रत्यह धारयन्त्या । कश्चिद्रेजे दिव्यनार्या परास्मल्लोके लोक प्रीणय स्नेह कीर्त्या ॥ ९२ ॥ गत्वा नून वैबुध सद्म रम्य मूर्च्छाभाजामाजगामान्तरात्मा । भूयो दृष्टप्रत्यया प्राप्तसज्ञा साधीयस्ते यद्रणायाद्रियन्ते ॥ ९३ ॥ कश्चिन्मूढ स्वापातमूढोऽप्यगोदुर्लभ्वा भूयश्चेतनामाहवाय । व्यावर्तिष्ट क्रोशत सत्पुरश्चैरत्यक्तश्चात्मा का च लोकानुवृत्ति ॥ ९४ ॥ भित्त्वोरस्को शत्रुणाकृष्य दूरादासन्नत्वात्कौचिदेकेपुणैव । अन्योन्यानष्टम्भसामर्थ्ययोगादूर्ध्वविन स्वर्गतावप्यभूताम् ॥ ९५ ॥ भग्नैर्दण्डैरातपत्राणि भूमौ पर्यस्तानि प्रौढचन्द्रद्युतीनि । आहाराय प्रेतराजस्य रौप्यस्थालीनीव स्थापितानि स्म भाति ॥ ९६ ॥ रेजुर्भग्न वक्षस कुङ्कुमाङ्का मुक्ताहारा पार्थिवाना व्यसूनाम् । हासालक्ष्या पूर्णकामस्य मन्ये मृत्यो र्दन्ता पत्तिरक्तासवस्य ॥ ९७ ॥ निम्नप्रोपीभूतमस्त्रक्षता नामस्त्र भूमौ यश्चकासाचकार । रागार्थं तत्किं नु कौसुम्भ मम्भ सैन्यानानाम तकान्त पुरस्य ॥ ९८ ॥ रामेण निसत्त्र कृत्वो हृदाना चित्र चक्रे पञ्चक क्षत्रियास्रे । रक्ताम्भोभिस्तत्क्षणादेव तस्मिन्सरयेऽसरया प्रावहन्द्वीपवत्य ॥ ९९ ॥ सदानात्तादस्त्रिभि शिक्षितास्त्रैराविध्याध शातशस्त्राव लूना । कूर्मौपम्य व्यक्तमन्तर्नदीनामेमा प्रापन्नङ्घ्रयोऽसृक्स्रवन्तीनाम् ॥ १०० ॥ पत्राकारैर्योधवक्त्रैरिभाना कर्णभ्रष्टैश्चामरैरव हसे । सोपस्कारा प्रावहन्नस्रतोया स्रोतस्विन्यो वीचिचूर्णै स्तरद्भि ॥ १०१ ॥ उत्क्रान्तानामामिषायोपरिष्टाद्व्याकाश बभ्रमु पत्रवाहा । मूर्ता प्राणा नूनमद्याप्यवेक्षमाणा काय त्याजिता दारुणास्त्रै ॥ १०२ ॥ आत वह्निर्दिक्षु पत्राग्रनाद प्रासैर्दूरादाशु तीक्ष्णैर्मुखाग्रे । आदौ रक्त सैनिकानामजीवैर्जीवै पश्चार्द्धनिघ्नूरपायि ॥ १०३ ॥ ओजोभाजा यद्रणे सस्थितानामादत्तीव्र सार्धमङ्गेन नूनम् । ज्वालाव्याजादुद्वमन्ती तदन्तस्तेजस्तार दीप्तजिह्वा वैवारी ॥ १०४ ॥ नैरन्तर्यच्छिन्नदेहान्तराल दुर्भक्ष्यस्य ज्वालिना वाशितेन । योद्धुर्बाणप्रोतमादीप्य मास पाकापूर्वस्वादमादे शिवाभि ॥ १०५ ॥ ग्लानिच्छेदि क्षुत्प्रबोधाय पीत्वा रक्तारिष्ट शोषिताजीर्णशेषम् । स्वादुकार कालखण्डोपदश क्रोष्टा डिम्ब व्यष्वणद्व्यस्वनच ॥ १०६ ॥ क्रव्यात्पूगै पुष्करण्यानकाना प्रेत्याशाभिर्मेदसो दारितानि । आभीलानि प्राणिन प्रेत्यवश्यन्कालो नून व्याददावाननानि ॥ १०७ ॥ कीर्णा रेजे साजिभूमि समन्तादप्राणद्भि प्राणभाजा प्रतीकै । बहारम्भैरर्थसयोजितैर्वा रूपै सद्गु सृष्टिकर्मान्तशाला ॥ १०८ ॥ त्वत्पत्रमुक्तविशिखैरहानि प्रकाशैरामूललूननवकेतककान्तदन्ता । त्रासावसन्नमदधार कपोलभागा सपादयन्ति करिण करिणीभ्रम न ॥ १०९ ॥ मिलितमिहिरभास मौलिमेतस्य दृष्ट्वा परवरतनुपादालक्तक तर्कयन्त्या । त्वदरिधरणिजानिर्मानुबिम्बेन गच्छन्सुरनगर मृगाक्ष्या वीक्ष्यते साम्यसूयम् ॥ ११० ॥ भवत्तुरग

१ आमूलात २ आयतम् ३ दृढहस्ती ४ भज्यमानास्थिपट शब्दयुक्तम् ५ बाणेन ६ बन्धनस्थानम् ७ वृ दै ८ नखकणे

१ उत्तरीयाणाम् २ नव ३ गुल्फदेशमधिकृत्य ४ शफरीकरा ५ मृतानाम् ६ पक्षिण, पक्षे,-वाणा ७ रौति स ८ कले वरम् ९ भुक्तवान् १० मुखानि ११ तुरगाणाम् १२ तृणाभि १३ भयकराणि १४ अभ्यवहरन् १५ अवयवै

निष्ठुरक्षुरदद्धनर्गयचिता क्षणात्समरनिच्युतप्रतिनृपालचेलाञ्चिता । इय रणधरा भवद्विरददानधाराजले किमु ववर्णतलेऽर्पित वसनपट्टमासिञ्चति ॥ १११ ॥ कृपाणकिरणानलैरधिगनीरपूरच्छटाजटालततिसंकुलं भटतिमिङ्गिलैराकुलम् । प्रमथ्य समरार्णवं वरमवाप्य लक्ष्मीस्त्वया विधाय मदमन्थरं मथनमन्दरं सिन्धुरम् ॥ ११२ ॥ झणज्झणितकङ्कणक्वणितकिङ्किणीक्र धनुर्ध्वनद्गुरुगुणाटनीक्रूरकरालकोलाहलम् । वितत्य निरतो गगनविरतसुरभुङ्ढयोर्निविश्रमभिरर्पते भुवनमीममायोधनम् ॥ ११३ ॥ प्रतीक्ष्यन्ते वीरा प्रतिमुखमुरोभि सरभस निपतन्तो हेति प्रतिनियतधैर्यानुभवत । विदीर्णत्वग्मारादन्तिपिशितविच्छिन्नधमनिप्रभाण्डास्थिस्नायुस्फुरत्तवविलक्ष्याप्रनिवहा ॥ ११४ ॥ गिरिवर्णरेके मृध भुवि परे तीक्ष्णनखरैः नियासातस्तेनाप्यहमहमिकाक्रान्तमनस । मिथो विन्ध्यन्ति स्म प्रबलतमसमर्दविदलत्किटिक्षोद पिष्टातकमुरभिनक्षत्रधभृत ॥ ११५ ॥ महोर्मिन्ना प्रतिनृपनय शङ्खनादानुदाराञ्श्रुत्वा रानन्युनरपि भुजादण्डचण्डविमान । आलिङ्गन्त्याश्रिदशमुदृशो भ्रूलता वीक्ष्य मुधा शापभ्रान्त्या चपलमनसो हस्तमावर्तयन्ति ॥ ११६ ॥ सुखङ्गिर्मदनारि वारणगर्णमेघायित कार्मुकैः शक्रचापायितमधरजैन गिरीन्द्रायितम् । खद्योतायितमस्त्रवह्निसमुद्भृतस्फुलिङ्गै सुरनागैश्चपरायित रणभुवा सैन्यैर्नभस्यायितम् ॥ ११७ ॥ भुजभ्रूयुगले युधा समधिकस्फाराणां क्षणात्स्वेदाम्भ पटलप्रघृष्टतिलकैर्दष्टाधरोष्ठैरपि । दष्टश्मश्रुभिरुत्पतद्भिरभित सकीर्णमालक्ष्यते त्वद्धस्तासिनिकृत्तरिभटमुखश्रेणीशिरोभिर्वियत् ॥ ११८ ॥ क्ष्वेडाभिरुत्तम पृषत्कनिकरैर्व्योम द्विधाखण्डितैर्दन्तैर्निहिपता धरातलमपि प्रच्छादयन्ती चिरम् । कुर्वातेऽश्रुजलाविलेक्षणपथान्वीतानराण्डोवक्त्रोमाख्यानि सन्नेपथून्यपि मुहुर्वर्म्माणि न पश्यताम् ॥ ११९ ॥ आशुशङ्गिरिवुञ्जरघटाविसीर्णकर्णज्वरव्यानिर्घोषमम्न्ददुन्दुभिरवैराध्मातमुज्जृम्भयन् । वेलद्भैरवभूरिरुण्डनिकरैर्वीरो विधत्ते भुवनतृप्यत्करालकरालवक्त्रनिधयी व्यारीर्यमाणा इव ॥ १२० ॥ नो चापाकर्षं न परिघर्णं न व्यासमावर्णं नो बाहुस्फुरण न बाणगमनं सल्लक्ष्यते ते रणे । किंतु प्रौढवरीन्द्रकुम्भविगलन्मुक्तागणप्रस्फुरत्सद्विश्लिष्टितिपालमौलिमणिभिर्विद्योततो भूरियम् ॥ १२१ ॥ वीराणां रण्डतुण्डप्रविघटनपटुस्फारदोर्दण्डचण्डव्यापाराद्धिप्रभाणभनिमग्नीरटाटोपवर्मप्ररूढ । कृट. कोऽप्येष युद्धाजिरभुवि जठश्रिनत्कृपाणुस्फारी लीयन्ते यत्र शत्रुप्रपतत्रिनिवहा कोटिश शरकीटा ॥ १२२ ॥ प्रासप्रोतप्रवीरोत्खणन्धिरपरामृष्टभुक्तानिघर्षाघातद्धाधिराजप्रतिमितनुग्दच्छायया वारितोष्णा । विश्राम्यन्ति क्षणार्धं प्रधनपरिसरेष्वेव मुक्ताभियोगा वीरा शस्त्रप्रहारव्रणभररुधिरोद्गारदिग्धाखिलाङ्गा ॥ १२३ ॥ जीवाकृष्टि स चक्रे नृपमुनिधनुष शत्रुगर्सीवदतामुर्लक्षासिमार्गणनामभवद्रविके तद्यशसेन लघुम् । मुक्ता तेन क्षमेति त्वरितमरिगणस्तत्तमाङ्गप्रतिष्ठा पञ्चत्वं द्वेषिसैन्ये स्थितमवनिपतिर्नापि सत्याचतर म ॥ १२४ ॥ युष्मद्दोर्दण्डमण्डल्यसनमितरणचण्डकोदण्डदण्डोन्मुक्तेषुच्छिन्नमूर्च्छत्प्रतिनृपतिभुजाखण्डमुण्डावकीर्णा । गायन्नृत्यत्प्रवल्गद्रजनिचरवधूदत्ततालं करालैर्वेतालैरट्टहासप्रकटितदशनैर्युद्धभूर्भाति भीमा ॥ १२५ ॥

---

## अरिपलायनम्

सालसाननयुक्तापि सालसाननवर्जिता । हारावरुद्धकण्ठापि विहारारिवधूस्तव ॥ १ ॥ विचरन्ति विलासिन्यो यत्र श्रोणिभरालसा । वृकाकाकशिवास्तत्र धावन्त्यरिपुरे तव ॥ २ ॥ स्वकान्तदवकान्तारो यद्वैरिसुदृशामभूत् । जघनस्तनमुखैर्यो व्यलिखत्कण्टकैर्नखे ॥ ३ ॥ काठिन्य कुचयो स्रष्टुं वाञ्छन्त्य पादपद्मयो । निन्दन्ति विश्वधातार त्वद्वाटीष्वरियोषित ॥ ४ ॥ वनेऽखिलकलासक्ता परिहृत्य निजालिय । त्वद्वैरिवनितावृन्दे पुलिन्दा कुर्वते रतिम् ॥ ५ ॥ वीर त्वद्रिपुरमणी परिधातुं पल्लवानि सस्पृह्य । न हरति वनभुवि निजकररुहरुचिखचितानि पाण्डुपत्रधिया ॥ ६ ॥ त्वद्वैरिणो वीर पलायितस्य प्रकाशयत्यक्तमरण्यमार्गान् । कृशानुरासीदभिनन्दनीयस्तुङ्गेषु लग्नो रिपुमन्दिरेषु ॥ ७ ॥ राजन्द्विपस्ते भयविद्रुतस्य भालस्थलं कण्टकिनो वनान्ता । अद्यापि किं वाऽनुसरिष्यतीति व्यापाटयन्द्रष्टुमिवाक्षराणि ॥८॥ इतस्त्वमद्विद्रुतवैरिभूभृत्प्रियाध दृष्टा वनमानवीजने । गताः पृथक्कृतमात्मदेशे शीतद्विष शीतलशीलता स्थि ॥ ९ ॥ समस्तावनीनाथमौले भवत्त पराक्षा द्विष पद्मविस्तारिनेत्रा । नितान्त विहस्ता सहस्तारविन्दैर्विधत्ते पुरस्तादुरस्ताडनानि ॥ १० ॥ अलसभुजलताभिर्नादतो नागरीभिर्भवनदमनराना नातिथिर्नो बभूव । त्वदरिनगरमध्ये सचरश्चैत्रजन्मा जरदजगरपीतः क्षीयते गन्धवाह ॥ ११ ॥ त्वदरिनृपतिमागावासस धूलिधाराधवलमहह भिक्षुं वीक्ष्य भर्गभ्रमेण । सुरभिदुदधिवेलाकानन गाहमानो दिशति कुसुमबाण दूरतो निर्गमाय ॥ १२ ॥ त्वदरिनृपतिकेलीसौधसरूढदूर्वाङ्कुरकवलविलोलं वीक्ष्य रङ्कु सुयाते । उपमम

१ कृशयुतमरण्यम्. २ अलकैन सुखमानन यस्या ३ पक्ष्मा गतिर्यस्या ४ व्यामानि ५ वायु ६ मृगम्

हरिणीनामुन्नतो भ्रूलताना प्रसरति रतिज्ञानिम्लानिजन्मा विवर्त ॥ १३ ॥ वर्षासु भीतमवगाह्निभुज भुजगमेक निगृह्य शिरसि स्थितमञ्जनाभम् । शून्ये तवारिनगरे शबरी सशङ्कमादित्सते कनकमुष्टिकृपाणलोभात् ॥ १४ ॥ स्फुट तरमटवीना प्रान्तरे पर्यटन्ती हरिहतगजकुम्भोमुक्तमुक्ताफलानि । परिकरयति हस्ताम्भोजशोणप्रभाभि परिहरति च दूरा मञ्जु गुञ्जाभ्रमेण ॥ १५ ॥ ये कन्दरासु निवसन्ति सदा हिमाद्रेस्त्वत्पातशङ्कितधियो विवशा द्विषस्ते । अप्यङ्ग मुत्पुलकमुद्वहता सकम्प तेषामहो बत भिया न बुधोऽप्य भिज्ञ ॥ १६ ॥ कुरबक कुचाघातक्रीडासुखेन वियुज्यसे बकुलविटपिन्स्मर्तव्य ते मुखासवसेचनम् । चरणघटनावन्ध्यो यास्यसशोक सशोकतामिति निजपुरत्यागे यस्य द्विषा जगदु स्त्रिय ॥ १७ ॥ अनारतपरिस्खलन्नयनवारिधाराशतप्रवृद्ध पथनिम्नगासलिलरुद्धयानोद्यमा । त्वदीयरिपुकामिनी बहुनिदेशयानैषिणी विनिन्दति वल्लृशा गुरुरुषाश्रुप प्रावृषम् ॥ १८ ॥ इतश्चेतश्चाद्भिर्विघटिततट सेतुरुदरे धरित्री दुर्लङ्घ्या बहुलहिमपङ्को गिरिरयम् । इदानीं निवृत्ते करितुरग नीराजनविधौ न जाने यातारस्तव च रिपव केन च पथा ॥ १९ ॥ क्षण कान्तागारप्रसरविलसन्मानसरति क्षण शैलोत्सङ्गे द्विजकुलरवाकृष्टहृदय । क्षण पत्रध्यानश्रुति पुलकितो यद्वयभराद्वमन्प्राप्तोऽरण्ये रिपुरवनिपालस्थितिमिव ॥ २० ॥ अये मातस्तात क्व गत इति यद्वैरिशिशुना दरीगेहे लीना निभृतमिह पृष्टा स्वजननी । करेणास्तस्य द्रुतमथ निरुध्याश्रुभृतया विनि श्वस्य स्फार शिव शिव दशैवोत्तरयति ॥ २१ ॥ अपर्णेय भूभृद्वनमटति वल्काम्बरधरा जटालो दिग्वासा शिखरिणि शिवोऽय निवसति । इति भ्रान्त्यायोन्य क्षणमिलितयो क्षोणितिलक द्विपत्पत्योस्ते शिव शिव शिवन्ति प्रणतय ॥ २२ ॥ पश्यैत्क्षिचल चपल रे का त्वराह कुमारी हस्तालम्ब वितर हहहा व्युत्क्रम क्वासि यासि । इत्थ पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्ते कन्या कचित्फलकिसलयान्याददानाभिधत्ते ॥ २३ ॥ खलप भूप किमपि चरित वीरवर्य त्वदीय मिथ्यावादा कनय इति नो दु प्रवादो रुणद्धि । मुक्ता मुक्ता मलयशिखरे त्वद्विपक्षारशेषैरण्डभ्रान्त्या भुजगलल्ना सादर पालयन्ति ॥ २४ ॥ क्षोणीपाल त्वदरिहरिणीलोचना शोचमाना गुञ्जाहार कुचकलशयोर्नि श्वसन्ती करोति । क्षुभ्यत्क्षीराम्बुधिलहरिसक्षोभिभिस्त्वद्यशोभिर्गौर मुक्ताफलमयमिवाविन्दते नन्दतन्वा ॥ २५ ॥ विमुञ्चति पदे पदे रुचिरनीरहारादिक गुरु गृहमसुसुर त्यजति चैव जीवाधिकम् । पलायनपरायणा तव विभो रिपोरङ्गना मुहुर्वलितकधर मिहिरमण्डल वीक्षते ॥ २६ ॥ धराधर तव द्विषा वनजुषा विहीनत्विषा दधे गुणनिधे धनुर्विगुणमप्यनेक गुणम् । फलाहरणयष्टिकाकरणकन्दरान्त शिवानिवारणविहगिकाकरणचुल्लिकाकर्षणे ॥२७॥ राजन्राजसुता न पाठयति मा देव्योऽपि तूष्णीं स्थिता कुब्जे भोजय मा कुमारसचिवर्नाद्यापि किं भुज्यते । इत्थ नाथ शुकस्तवारिभवने मुक्तोऽध्वगै पञ्जराच्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ २८ ॥ क्वामन्त्य क्षतकोमलाङ्गुलिगलद्रक्तै सदर्भा स्थली पादै पातितयावकैरिव गलद्बाष्पाम्बुधौताननना । भीता भर्तृकरावलम्बितकरास्त्वद्वैरिनार्योऽधुना दावाग्नि परितो भ्रमन्ति पुनरप्युद्यद्विवाहा इव ॥ २९ ॥ तन्वीमुज्झितभूषणा कटगिर रोमोद्गम बिभ्रतीं वेपन्तीं व्रणिताधरा विवसना सीत्कारमातन्वतीम् । दोर्भ्या चण्डतुषारपातसभयामालिङ्ग्य कण्ठे भृश स्वा मूर्तिं दयितामिवातिरसिका त्वद्विद्विष शेरते ॥ ३० ॥ भूसर्परजोनिपातमलिना स्वस्थाद्दहारप्रच्युता सामान्यैरपि जन्तुभि करतलैर्नि शङ्कमालिङ्गिता । सल्मा क्वचिदेकतामुपगता क्वापि प्रबुद्धा क्वचित्सुप्ता क्वापि च सारिवत्प्रतिगृह भ्रान्ता त्वदारिस्त्रिय ॥ ३१ ॥ कर्षद्भि सिचयाञ्चलान्यतिरसाकुर्वद्भिरालिङ्गन गृह्णानै कचमालिहद्भिरधर बिभ्राणयद्भि करौ । प्रत्यक्षेऽपि भवद्विरोधिनृपतेरन्त पुराणामहो धिक्कष्ट विटपैर्विटैरिव वने किं नाम नो चेष्टितम् ॥ ३२ ॥ स्नाता प्रावृषि वारिवाहपटलै प्रोद्भूतदूर्वाङ्कुरव्याजेनात्तकुशा प्रणालसलिलैर्दत्त्वा निवापाञ्जलीन् । प्रासादास्तव विद्विषा परिपतत्कुड्यस्थपिण्डच्छलात्कुर्वन्ति प्रतिवासर निजपतिप्रताय पिण्डक्रिया ॥ ३३ ॥ मौलिं मानविधि विना नमयितु हार स्वय गुम्फितु निर्यातु दयितस्य पाणिकमलच्छाया विना वर्त्मनि । निद्रातु च विनाङ्कपालिशयन द्रष्टु च शून्या दिश सख्या त्वत्प्रतिवीरनीरजमुखी साकूत मध्याप्यते ॥ ३४ ॥ भ्रात तालफलाशया स्तनतट बिम्बभ्रमेणाधरो दष्ट पाकविदीर्णदाडिमधिया लीढा स्फुरन्तो रदा । भ्राम्यन्ती भ्रमनि स्पृहानुविपिन त्वद्वैरिसीमन्तिनी निद्राणा मुहुराहता मुहुरपि क्षिप्ता च शाखामृगै ॥ ३५ ॥ त्वत्प्रत्यर्थिवसुन्धरेशतरुणी सनासत सर्वरं यान्तीर्गिर विलुण्ठितु सरभस याता किराता वने । तिष्ठन्ति स्तिमिता प्ररूढपुलकास्ते विस्तृतोपक्रमास्तासामुत्तरले स्तनैरतितरा लोलैरपाङ्गैरपि ॥ ३६ ॥ एतस्मिन्विजने वनेऽतनुतरच्छायाकारे सुख तिष्ठामीति तव द्विषामधिपतिर्यावद्विधत्त

१ ल क्षारम २ गात्र ३ भयात ४ स्तब्धा ५ अनिच्छ पलै ६ महद्भि

मन्ये देव तथा क्रमेण जनितो युष्मत्प्रतापानलो येनारातिवधूविलोचनजलैः सिक्तोऽपि [1]संवर्धते ॥ १५ ॥ देव त्वद्भुजदण्डदर्पगरिमोद्गीर्णप्रतापानलज्वालापक्विमकीर्तिपारदघटी विस्फारिता त्रि दव । शेषाहि कति तारका कति कति क्षीरोदधि कत्यपि प्रालेयाचलशङ्खशुक्तिकरका कर्पूरकुन्दे देव ॥ १६ ॥ [2]भेङ्गाकीर्तिमषीमलीमसतया प्रत्यर्थिसेनाभटश्रेणीनि[3]न्दुककाननेषु विलसत्यस्य प्रतापानल । अस्मा[4]दुत्पतिताः स्फुरन्ति जगदुत्सङ्गे स्फुलिङ्गाः स्फुटं भालोद्भूतभवाक्षिभानुहुतभुग्जम्भारि[6]दम्भोलय ॥ १७ ॥ तादृग्दीर्घविरिञ्चि[7]वासरविधौ जानामि यत्कर्तृता शङ्के यत्प्रतिबिम्बमम्बुधिपयःपूरोदरे वाडव । व्योमव्यापिविपक्षराजकयशस्तारापरामातुकः कासामस्य न स प्रतापतपनः पारं गिरां गाहते ॥ १८ ॥ शम्भुर्मानससंनिधौ सुरधुनीं मूर्ध्ना दधानः स्थितः श्रीकान्तश्चरणस्थितामपि वहन्नेतां निलीनोऽम्बुधौ । ब्रह्म पङ्करुहे कमण्डलुगतामेनां दधन्नाभिभूर्मन्ये वीर तव प्रतापदहनं ज्ञात्वोल्बणं भाविनम् ॥ १९ ॥ युष्मत्प्रौढतरप्रतापतपनज्वालावलीव्याकुले ब्रह्माण्डे मधुसूदनोऽहिशयने शेते पयःसागरे । शम्भुर्जह्नुसुतां दधाति शिरसा भूमिस्तुषाराचलं तापव्याकुलितः पतत्यतितरां भानुः समुद्रे मुहुः ॥ २० ॥ नार्यः कुङ्कुमशङ्कया निटिलगं प्रोञ्छन्त्यपास्तद्विषां साध्यरागममुं विभाव्य गगने गच्छन्ति केलीगृहम् । मुग्धा दावधियोऽरयस्तव विभो यान्ति द्रुतं कानने लाक्षाराग इति प्रकुप्यति धवे कान्ता प्रतापोदये ॥ २१ ॥ यो नास्ताचलमस्तकं प्रति गतो दीनत्वमालम्बते यो नायाति निशासु संशयपदं नोदेति गिर्याश्रयात् । यो राहोरपि कर्वशेषु दशनेष्वासीन्न वा गोचरः सोऽयं भूप तव प्रतापतपनो वर्वर्ति सर्वोपरि ॥ २२ ॥ कान्तारे जलवृक्षवैरिणि मुहुस्त्वद्वैरिवामभ्रुवो बाल्यैराकुललोचनैः प्रतिपदं रुद्धक्रमाश्चङ्क्रमे । पृथ्वीचण्डरुचे पटच्चरदशासंघट्टदीप्तप्रभं सिञ्चन्त्यञ्जलिसंचिताश्रुभिरलं युष्मत्प्रतापानलम् ॥ २३ ॥ अध्यायोधनवेदि मार्गणकुशानास्तीर्य सन्नस्रुचा हुत्वारे पललं चरुं हविरसृक् मस्तकस्वस्तिके । सर्वेष्वाहवनीयमानसदसिरयोऽसौ प्रतापानलोऽस्थापि द्रागुदकाञ्जलीकृतचतुःपाथोधिना श्रीमता ॥ २४ ॥ देव त्वद्भुजदण्डचण्डिमचमत्कारिप्रतापानलज्वालाजालभयादिवाभिनिशति क्षीराम्बुधिं माधवः । भर्गः स्वर्गधुनीं दधाति शिरसा त्यक्तत्रिलोकीकृतिर्वेधाः किं तु मुहुः कमण्डलुजलैरात्मानमासिञ्चति ॥ २५ ॥ श्रीमद्वीराधिधीर पृथुतरमहसस्त्वत्प्रतापाग्निकीलैः[1] चुलुकाब्धे शोषवाता शरणमनुगतं कुत्रचित्कश्चिदेव । चन्द्रः कीलासुधांशुस्त्रिदशतरुवरः पाणिपद्मं च कोशे लक्ष्मी [2]क्ष्वेडं च कोपे जलधरकुसुमं वैरिकान्ताहृगन्ते ॥ २६ ॥ प्रागाक्रम्योदयाद्रिं चरमगिरिमतिस्पर्धया तिग्मरश्मेर्भेरुं पयत्नं लङ्कानगरमुपगतं कौतुकात्त्वत्प्रतापं । वीक्ष्याशु वीतिहोत्रं पुनरपि विपदं देव निश्चिन्वतीनां यः क्षोभो राक्षसीनां क्षणमजनि स हि त्वद्द्विषां सर्वदास्ताम् ॥ २७ ॥ त्वत्खड्गाघातजातव्यथरिपुवनितामुक्तबाष्पाम्बुधारासारैर्दारादुदाराद्दिशि दिशि सरितामुद्भवाश्चेद्भवेयुः । कल्पान्तक्रूरकेलिप्रकरविजयिनो विस्फुरत्त्वत्प्रतापात्पारावारानपारानपि सपदि परं शुष्यतः पूरयेत्कः ॥२८॥ दुर्वाराराति[3]वाजीवनदवदहनः कौसुम्भो दिग्वधूनां सर्वाङ्गीणोऽङ्गरागस्त्रिभुवनभवनध्वान्तविध्वंसदीपः । त्वद्दोरुद्दामदर्वीकरमुखहुतभुग्भूतधात्रीपुरन्ध्रा वासो माञ्जिष्ठसुवारमणकुलमणे जागरीति प्रतापः ॥ २९ ॥ भूजाने किं न जाने भवदतुलभुजभ्राजमानप्रतापज्योतिर्ज्वालावलीभिर्जलनिधिवलयं निर्जलं किं न भूयात् । युष्मत्प्रत्यर्थिपृथ्वीपरिवृढवनितानीरनेत्रस्रवन्तीसूत्रस्रोतःसहस्रैरयमिह परितश्चेन्न पूर्येत सद्यः ॥ ३० ॥

---

## कीर्तिवर्णनम्

राजंस्त्वत्कीर्तिचन्द्रेण तिथयः पूर्णिमाः कृताः । मद्गेहान्न बहिर्याति तिथिरेकादशी भयात् ॥ १ ॥ अस्थिवद्दधिवच्चैव कुष्ठवत्पिष्टवत्तथा । राजंस्तव यशो भाति शरच्चन्द्रमरीचिवत् ॥ २ ॥ सरस्वती स्थिता वक्त्रे लक्ष्मीर्वेश्मनि ते स्थिता । कीर्तिः किं कुपिता राजन् येन देशान्तरं गता ॥ ३ ॥ यद्गुणैर्ग्रथितैः शुद्धैरमितैर्ब्रह्मगोलकः । विधत्ते कीर्तिकन्याया क्रीडाकन्दुककौशलम् ॥ ४ ॥ सिक्तः स्फटिककुम्भान्तः स्थितः श्वेतीकृतैर्जलैः । मौक्तिकश्चेद्भवेत् सूते तत्पुण्यैस्ते समं यशः ॥ ५ ॥ अहो विशालं भूपाल भुवनत्रितयोदरम् । माति मातुमशक्योऽपि यशोराशिर्यदत्र ते ॥ ६ ॥ त्वत्कीर्तिराजहंसी वैरिवधूवदनभाजनस्थमपि ।

---

१ अनाथ भाव —वैरिस्त्रिय स्वभर्तृमरण यथा यथाऽधिकं रुदन्ति तथा तथाऽधिक तन्नेत्राम्बुभिस्त्वत्प्रतापाग्नि संवर्धते त्वत्प्रतापोऽधिको भवतीति यावत् यत स प्रतापाग्निर्वडवानल । पितुस्ताडिनश्च मातु समुत्पन्नस्तौ च पितरौ पानीययोगादेवोज्जृम्भेते ऽतस्तत्पुनोऽपि त्वत्प्रतापो भवद्वैरिरमणीनेत्राम्बुभि सिच्यमानो वृद्धिमाप्नोत्यतदुचितमेवेति २ दरानय ३ कालस्य भवनेषु ४ तिन्दुककाष्ठेभ्यो दह्यमानेभ्यो महान्त स्फुलिङ्गा उच्छिद्यन्तीति वृद्धव्यवहार ५ हरनिटिलनेत्रम् ६ कुलिशम् ७ 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति

१ अर्चि २ गरलम् ३ अस्ताचल ४ धारासंपात ५ अपरिमित

पीत हासक्षीर व्यक्तीकृतमनुनीर च ॥ ७ ॥ कुचकलशोर्व्य वलानामलकायामथ पयोनिधे पुलिने । क्षितिपाल कीर्तयस्ते हारन्ति हरन्ति हीरन्ति ॥ ८ ॥ रजनीषु विमलभानो करजालेन प्रकाशितं वीर । धवलयति भुवनमण्डलमखिलं तव कीर्तिसततिः सततम् ॥ ९ ॥ दूरेऽपि श्रुत्वा भवदीयकीर्तिं कर्णौ हि तृप्तौ न च चक्षुषी मे । तयोर्विवाद परिहर्तुकाम समागतोऽह तव दर्शनाय ॥ १० ॥ आकर्ण्य भूपाल यशस्त्वदीय विधूनयन्तीह न के शिरासि । निश्वमेगमङ्गभयेन धात्रा नाकारि कर्णौ भुजगेश्वरस्य ॥११॥ यशाञ्जनश्यामलखड्गपट्टजातानि जाने धवलत्वमापु । अरातिनारीगणपाण्डुगण्डस्थलीनिर्लुठनाद्यशासि ॥१२॥ य कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशा मुखानि । तत्कीर्तिभि क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभि ॥ १३ ॥ इय यशासि द्विपत सुधारुच किमिद्धमेतद्द्विपत विमाननम् । यशोभिरस्याखिललोकधाविभिर्विमोचिता धावति तामसी मसी ॥ १४ ॥ अद्य समितिसमुग्रवीरयोर्वर्तमुत्फुल्लजालम्बुमृणालहारिणी । द्विषद्रणस्त्रैणदृगम्बुनिर्झरे यशोमरालावलिरस्य खेलति ॥ १५ ॥ अपि मरन्तीमपि देहगर्भात्कीर्तिं परेषामसतीं वदन्ति । स्वैर चरन्तीमपि च त्रिलोक्या त्वत्कीर्तिमाहु कथय सतीं नु ॥ १६ ॥ करवालकरालवारिधारा यमुना दिव्यतरगिणी च कीर्ति । तव कामद तीर्थराज दूरादनुगच्छाति सरस्वती कवीनाम् ॥ १७ ॥ त्रिजगद्धनलङ्घनाद्भिस्तव यशोभिरतीव पविनिता । प्रथमपार्थिवपुगवकीर्तयो विबुधसिन्धुजलैरिव सिन्धव ॥ १८ ॥ त्वत्कीर्तिमौक्तिकफलानि गुणैस्त्वदीये सर्दर्भितु विबुधैर्यदि दम प्रवृत्ता । नान्तो गुणेषु न च कीर्तिषु रन्ध्रलेशो हारो न जात इति ताश्च मिथो हसन्ति ॥ १९ ॥ पृथ्वीपते शुभमते भवतो भवस्य श्रुभो वय सुयशसा मियदन्तर वा । गौरी चराग गिरिशो निजमर्धमङ्ग गौरीकृत च भवता भुवन समस्तम् ॥ २० ॥ कीर्तिस्तव क्षितिप याति भुजङ्गगेहं मातङ्गसगमकरी च दिगन्तकेषु । त्वत्कम्बर भजति नन्दनमप्यगम्य किं किं करोति न निर्गलता गता स्त्री ॥ २१ ॥ निर्मुक्ताशेषधवलैरचलैन्द्रमन्थसमुन्नदुग्धमयसागरगर्भगौरै । राजन्दिग्वहुलपक्षदलन्मृगाङ्कच्छेदोज्ज्वलैस्तव यशोभिरशोभि विश्वम् ॥ २२ ॥ प्रतिनगरमटन्ती प्रत्यगार व्रजन्ती प्रतिनरपतिवक्ष कण्ठपीठे लुठन्ती । गिरिगरिमनितम्बाच्छादने सावधाना तदपि च तव कीर्तिर्निर्मलेति चित्रम् ॥ २३ ॥ त्यजसि यदपि लक्ष्मीं कीर्तिमासाद्य दानैर्व्रजति तदपि कीर्तिं सिन्धुपार न लक्ष्मी । कथय क इह हेतुर्नारवेश त्वदीये वसति हृदयपद्मे नन्दसूनुर्मुरारि ॥ २४ ॥ अनुक्षणमनुक्षण क्षितिप रक्ष्यमाणा त्वया प्रयाति विदिशो दश प्रबलकीर्तिरेकाकिनी । इय नियतमर्थिषु प्रतिदिनं वितीर्णा रमा जहाति न तवान्तिक द्वितयमेतदत्यद्भुतम् ॥ २५ ॥ समुच्चतधनस्तनस्तबकचुम्बितुम्बीफलक्वणन्मधुरवीणया विबुधलोकवामभ्रुवा । त्वदीयमुपगीयते हरकिरीटकोटिस्फुरत्तुषारकरकन्दलीकिरणपूरगौर यश ॥ २६ ॥ वनेषु वनदेवता दिवि दिवौकसा वल्लभा भुजंगकुलकन्यका भुजगलोकलीलावने । यश समरसंचित नरमृगेन्द्र गायन्ति ते प्रभाविजितकौमुदीकुमुदपाण्डुता डम्बरम् ॥ २७ ॥ अपायि मुनिना पुरा पुनरमायि मर्यादयार्पतारि कपिना पुरा पुनरदाहि लङ्कारिणा । अमथि सुरवैरिणा पुनरबन्धि लङ्कारिणा क नाम वसुधापते तव यशोम्बुधि क्वाम्बुधि ॥ २८ ॥ महाराज श्रीमज्जगति यशसा ते धवलिते पय पारावार परमपुरुषोऽय मृगयते । कपर्दी कैलास सुरपतिरपि स्व करिवर कलानाथं राहु कमलभवनो हसमधुना ॥ २९ ॥ कुविन्दस्त्व तावत्पटयसि गुणग्राममभितो यशो गायन्त्येते दिशि दिशि च नग्नास्तव विभो । शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथापि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥ ३० ॥ पतत्येतत्ते जोहुतभुजि कदाचिद्यदि तदा पतङ्ग स्यादङ्गीकृततम पतङ्गापदुदय । यशोऽमुष्येत्रोपार्जयितुमसमर्थेन विधिना कथचित्क्षीराम्भोनिधिरपि कृतस्तत्प्रतिनिधि ॥ ३१ ॥ इन्दोर्लक्ष्म त्रिपुरजयिन कण्ठमूल मुरारिर्दिङ्गनागाना मद जलमपीमाञ्जि गण्डस्थलानि । अद्याप्युर्वीवलयतिलक श्यामलिम्नानुलिप्तान्याभासन्ते वद धवलित किं यशोभिस्त्व-

1 कम्पयन्ति 2 पृथ्वी 3 शेषस्य 4 भुवनिगमुह 5 शुक्ल्यानि 6 गुणितुम् 7 देवाङ्गना 8 नागलोकम्, पक्षे,-गणिकापरिसरेइदम्, 9 ऐरावतादीनामष्टदिग्गजानां समागमकरी, पक्षे,-चण्डालसंगमकारिणी 10 दिक्पर्यन्तेषु, पक्षे,-विजनप्रदेशेषु 11 व्योम, पक्षे,-वस्त्रम् 12 सुरालयवनम् पक्षे,-पुत्रम् 13 गन्तुमशक्यम्; पक्षे,-गमनानर्हम् 14 निष्प्रतिबन्धकम्

1 पीत 2 अगस्तिना 3 मित 4 तीर्ण 5 हनुमता 6 मथित 7 बद्ध 8 क्षीरसमुद्रम् 9 विष्णु 10 शिव 11 इन्द्र 12 ऐरावतम् 13 चन्द्रम् 14 विधि 15 यत सर्वेषा समुद्राणां पयसां गगनानां सवभक्ष्याणा पक्षिणा च त्वच्छ्वेतकीर्त्या श्वेतत्वात्क्षीराब्ध्यादीनामनवगमस्तेषामनस्ते तान्सर्वत्रावलोकयन्तीति भाव 16 तन्तुवाय, पक्षे,-कु पृथिवीं विन्दति लभते स 17 पट वस्त्र करोषि, पक्षे,-पटुं करोषि 18 तन्तु, पक्षे,-सद्गुण 19 नग्ना, पक्षे,-स्तुतिपाठका 20 कज्जल 21 दिग्गजानाम् 22 मुक्तानि 23 नीलिम्ना

दीये ॥ ३२ ॥ किं वृत्तान्ते परगृहगते किंतु नाहं समर्थस्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः । गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्यामुन्मत्तेव भ्रमति भवतो वल्लभा देव कीर्तिः ॥ ३३ ॥ कैलासस्य प्रथमशिखरे वेणुसंमूर्च्छनाभिः श्रुत्वा कीर्तिं विबुधरमणीगीयमानां यदीयाम् । स्रस्तापाङ्गाः सरसबिसिनीकाण्डसंजातशङ्का दिङ्मातङ्गाः श्रवणपुलिने हस्तमावर्तयन्ति ॥ ३४ ॥ अध्याहारः स्मरहरशिरश्चन्द्रशेषस्य शेषस्याहेर्भूयः फणसमुचितः कायदण्डीनिकायः । दुग्धाम्भोधेर्मुनिचुलुकनत्रासनाशाभ्युपायः कायव्यूहः क्व जगति न जागर्त्यदः कीर्तिपूरः ॥ ३५ ॥ कथमवनिप दर्पो यन्निशातासिधारादलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः । ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ ३६ ॥ समितिपतितनिपाताकर्णनव्रागदीर्णप्रतिनृपतिमृगाक्षीलक्षवक्षःशिलासु । लिखितलिपिरिवोरस्ताडनव्यस्तहस्तप्रखरनखरटङ्कैस्त्वस्य कीर्तिप्रशस्तिः ॥ ३७ ॥ सुसितवसनालंकारायां कदाचन कौमुदीमहसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः । तदनु भवतः कीर्तिः केनाप्यगीयत येन सा प्रियगृहमगान्मुक्ताशङ्का क्व नासि शुभप्रदः ॥ ३८ ॥ देव त्वद्यशसि प्रसर्पति जगल्लक्ष्मीमुधोच्चश्रवश्चैरावणकौस्तुभ स्थितिमिवामन्यन्त दुग्धाम्बुधौ । किं त्वेकः पुनरस्ति दूषणकणो यन्नोपयाति भ्रमात्कृष्ण श्रीः शितिकण्ठमद्रितनया नीलाम्बरं रेवती ॥ ३९ ॥ इन्दुं निन्दति चन्दनं न सहते मल्लीस्रजं नेक्षते हारं द्वेष्टि सिताब्जमुज्झति बिसस्तोमं विगृह्णाति च । श्रीभूपाल महीधरेषु विपिनेष्वम्भोधितीरेषु च त्वत्कीर्तिस्त्वदरिप्रिया च विलसत्युच्चैः स्फुरत्पाण्डिमा ॥ ४० ॥ इन्दुं निन्दति चन्दनं न सहते विद्वेष्टि पङ्केरुहं हारं भारमवैति नैव कुरुते कर्पूरपूरे मनः । स्वर्गङ्गामवगाहते हिमगिरिं गाढं समालिङ्गति त्वत्कीर्तिर्विरहातुरेव न मनागेकत्र विश्राम्यति ॥ ४१ ॥ यस्य क्षोणिपतेर्विहायसि यशोराशौ चमत्कुर्वति द्राक्कर्पूररजोभ्रमेण वणिजो वीथीमुपस्कुर्वते । चञ्चु चञ्चलयन्ति चन्द्रकिरणभ्रान्त्या चकोराः पयोबुद्ध्या व्योम्नि नियोजयन्ति कलशीमानीय वामभ्रुवः ॥ ४२ ॥ कर्पूरादपि केतकादपि दलत्कुन्दादपि स्वर्णदीकल्लोलादपि कैरवादपि चलत्कान्ता हसन्तादपि । दुग्धोन्मुक्तकलङ्कशंकरशिरःशीतांशुखण्डादपि श्वेताभिस्तव कीर्तिभिर्धवलिता ससार्णवा मेदिनी ॥ ४३ ॥ देव त्वद्यशसा सदा सुमहसा गीर्वाणवृन्देऽखिले शम्भोर्मा वमयापिते तु सहसा यत्कौतुकं तच्छृणु । साकूता सकुतूहला सचकिता सोत्कण्ठिता साद्भुता साशङ्काश्च मुहुर्मुहुर्मधुरिपौ लक्ष्म्यादृशः पातिताः ॥ ४४ ॥ किं शीतांशुमरीचयः किमु सुरस्रोतस्विनीवीचयः किंवा केतकसूचयः किमथवा चन्द्रोपलानां चयः । इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिताः कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति यत्कीर्तयः ॥ ४५ ॥ श्रीमद्राजशिखामणे तुलयितुं धाता त्वदीयं यशः कैलासं च निरीक्ष्य तत्र लघुतां निक्षिप्तवान्पूर्तये । उक्षाणं तदुपर्युमासहचरं तन्मूर्ध्नि गङ्गाजलं तस्याग्रे फणिपुंगवं तदुपरि स्फारं सुधादीधितिम् ॥ ४६ ॥ भारत्या वदनं श्रिया च सदनं श्रीकण्ठभक्त्या मनो धर्मेण श्रवणौ परैश्च चरणौ शौर्येण बाहुद्वयम् । दानेनापि करौ समीक्ष्य सकलं यस्याश्रया भूतलं स्थातुं चानवकाशता कथमियं कीर्तिस्तु दूरं गता ॥ ४७ ॥ अस्योर्वीरमणस्य पार्वणविधुद्वैराशसंज्ञं यशः सर्वाङ्गोज्ज्वलशर्वपर्वतसितश्रीगर्वनिर्वासि यत् । तत्कम्बुप्रतिबिम्बितं किमु शरत्पर्जन्यराजिश्रियः पर्यायः किमु दुग्धसिन्धुपयसां सर्वानुवादः किमु ॥ ४८ ॥ कर्पूरन्ति सुधाद्रवन्ति कमलाहासन्ति हसन्ति च प्रालेयन्ति हिमालयन्ति करकासारन्ति हारन्ति च । त्रैलोक्याङ्गनरङ्गलङ्घिमगतिप्रागल्भ्यसंभाविताः शीतांशोः किरणच्छटा इव जयन्त्येतर्हि तत्कीर्तयः ॥ ४९ ॥ किं चित्रं भुवनानि पावयति यद्यत्राहितानां यशो हंसान्मज्जयति प्रतापदहनं निर्वापयत्याशु यत् । आश्चर्यं नृपनायकस्य भवतो यत्कीर्तिमन्दाकिनी तानारोहति भूधरांजलनिधींल्लङ्घ्य गच्छत्यपि ॥ ५० ॥ अर्वाङ्माहितपौर्वकीर्तिवनितादीव्यत्सिताशुभ्रम कैलासीकृतदिक्करीन्द्रशिरसि न्यस्तस्वपादाम्बुजम् । विश्वव्याप्यविनाशि शंकरपदं यायात्त्वदीयं यशो न स्यादस्य यदि क्षितीश भवतो दानादिकेभ्यो जनिः ॥ ५१ ॥ कृत्वा मेरुमुलूखलं प्रहसता वृन्देन दिग्योषितां स्वर्गङ्गामुसलेन शालय इव त्वत्कीर्तयः कण्डिताः । तासां राशिरसौ तुषारशिखरी तारागणास्तत्कणाः किं चान्यच्छशिखण्डशूर्पविसरज्ज्योत्स्नाश्च तत्पांसवः ॥ ५२ ॥ कैलासीयति कैरवीयति लसत्कर्पूरपुञ्जीयति क्षीरोदीयति मौक्तिकीयति नभोगङ्गातरङ्गीयति । हंसीयति मानसीयति शरन्मेघीयति क्षोणिभृन्नाथीयत्यमृतीयति क्षितितले देव त्वदीयं यशः ॥ ५३ ॥ गङ्गीयत्यसितापगा फणिगणः शेषीयति श्रीपतिः श्रीकण्ठीयति

१ दीपपुरक. २ समूहः. यावत्सप्त कार्यैर्भवितव्यमिति भावः. ३ कायसंघातः. ४ अभिन्ना, अभ्यरति यामयोग्या इति यावत्. ५ बन्धदम्.

१ सन्ततम्. २ कैलासस्य. ३ कौमारार्पितशुभ्रम्. ४ रूपान्तरम्. ५ भवसारि पुनरुक्तिः.

आपाण्डु पीनकठिन वर्तुल सुमनोहरम् । कर्णकूप्यते ऽत्यर्थं किं वृद्धैरपि सस्पृहम् ॥ १० ॥ एकचन्द्रे काकोऽय विलमिच्छन्न पन्नग । क्षीयते वर्धते चैव न समुद्रो न चन्द्रमा ॥ ११ ॥ छत्रधारी न राजासौ जटाधारी न चेश्वर । सृष्टिकर्ता न स ब्रह्मा छिद्रकर्ता न तस्कर ॥ १२ ॥ अस्थि नास्ति शिरो नास्ति बाहुरस्ति निरङ्गुलि । नास्ति पादद्वय गाढमङ्गमालिङ्गति स्वयम् ॥ १३ ॥ अस्ति ग्रीवा शिरो नास्ति द्वौ भुजौ करवर्जितौ । सीताहरणसामर्थ्यो न रामो न च रावण ॥ १४ ॥ नरनारीसमुत्पन्ना सा स्त्री देहविवर्जिता । अमुखी कुरुते शब्द जातमात्रा विनश्यति ॥ १५ ॥ दन्तैर्हीन शिलाभक्षी निर्जीवो बहुभाषक । गुणस्यूतिसमृद्धोऽपि परपादेन गच्छति ॥ १६ ॥ न तस्यादिर्न तस्यान्तो मध्ये यस्तस्य तिष्ठति । तवाप्यस्ति ममाप्यस्ति यदि जानासि तद्वद ॥ १७ ॥ य एवादि स एवान्तो मध्ये भवति मध्यम । य एतन्नामिनानीया क्षणमात्र न जीवति स ॥ १८ ॥ पर्वताग्रे रथो याति भूमौ तिष्ठति सारथि । चलते वायुवेगेन पदमेक न गच्छति ॥ १९ ॥ श्याम च वर्तुलाकार पुनाम चतुरक्षरम् । शकारादि मकारान्त यो जानाति स पण्डित ॥ २० ॥ अर्धचन्द्रनदाकार स्त्रीनामाय च त्र्यक्षरम् । नकारादि रिकारान्त यो जानाति स पण्डित ॥ २१ ॥ अष्टपादश्चतुष्कर्णो द्विमुखी द्विमुखस्तथा । रात्रावागत्य पठेद्वारो न च देवो न राक्षस ॥ २२ ॥ वृक्षस्याग्रे फल दृष्ट फलाग्रे वृक्ष एव च । अकारादि सकारान्त यो जानाति स पण्डित ॥ २३ ॥ चतुर्मुखो न च ब्रह्मा वृषारूढो न शङ्कर । निर्जीवी च निराहारी अजस्र धान्यभक्षणम् ॥ २४ ॥ कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी । पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डित ॥ २५ ॥ अपूर्वोऽय मया दृष्ट कान्त कमललोचने । शोऽन्तर यो विजानाति स विद्वान्नात्र सशय ॥ २६ ॥ पर्वताग्रे रथारूढो भूमौ तिष्ठति सारथि । चक्रवद्भ्रमते पृथ्वी तस्याह कुलपालिका ॥ २७ ॥ अर्धचन्द्रसमायुक्त पुनाम चतुरक्षरम् । ककारादि लकारान्त मिह जानाति पण्डित ॥२८॥ अनुनेतु मानिन्या दयित श्चरणे सरागचरणाया । यानन्पतित स तया तच्चरणम वधीरित कस्मात् ॥ २९ ॥ गीत्वा किमपि व्याध शृङ्ग जग्राह तरुणहरिणस्य । तमथ समीक्ष्योद्यनवर्मणीमपि लज्जिता व्याधी ॥ ३० ॥ काचिन्मृगाक्षी प्रियविप्रयोगे निशीथिनीपारमपारयन्ती । आगातुमादाय कर वीणा मुद्रीवमालोक्य शनैरहासीत् ॥ ३१ ॥ सदारिमध्यापि न वैरियुक्ता नितान्तरक्तापि सितैव नित्यम् । यथोक्तवादिन्यपि नैव दूती का नाम कान्तेति निवेदयाशु ॥ ३२ ॥ वृक्षाग्रवासी न च पक्षिराजस्त्रिनेत्रधारी न च शूलपाणि । त्वग्वस्त्रधारी न च सिद्धयोगी जल च बिभ्रन्न घटो न मेघ ॥ ३३ ॥ वृक्षाग्रवासी न च पक्षिजातिस्तृण च शय्या न च राजयोगी । सुवर्णकायो न च हेमधातु पुसश्च नाम्ना न च राजपुत्र ॥ ३४ ॥ चक्री त्रिशूली न हरिर्न शभुर्महान्बलिष्ठो न च भीमसेन । स्वच्छन्दचारी नृपतिर्न योगी सीतावियोगी न च रामचन्द्र ॥ ३५ ॥ आद्येन हीना जलवानहव्य मध्येन हीन भुवि वर्णनीयम् । अन्तेन हीन ध्वनते शरीर हेमाभिध स प्रियमातनोतु ॥ ३६ ॥ नरतापहरो न दस्युकुल खट्वाङ्ग-

(१०) पक्वबिल्वफल कुचयुगल च (११) मक्षिका (१२) पुष्पात (१३) विषयदण्ड (१४) कञ्चुक (१५) घोटिका (१६) उपानत् (१७) नयनम् (१८) यवमम् (१९) कुलालचक्रदण्डौ (२०) शालिग्राम (२१) 'नवरी' इति लोके (२२) वाद्यवतुघट 'चौपडा' इति भाषायाम् (२३) अननम (२४) वृषभस्यो गोण (२५) लेखनी (२६) अगोर (२७) कुम्भकारस्य

१ नासिकाचूर्णनिक्षेपणार्थं वृद्धैरपि नियत इति प्रसिद्धि २ अङ्गुष्ठमध्यमाङ्गुली ३ अद्भुतम्



(२८) करताल वाद्यविशेष वा करवाल (२९) रजस्वला यत

(३०) व्याध किमप्यद्भुत गान गीत्वा गानमूर्च्छितविमनचित्तस्य तरुणहरिणस्य शृङ्ग जग्राह किमर्थम्? यतो मह्यमनुचितस्तत्र याचकस्य म इद शिरो दानाति अथ न च हरिण शिरोदानायोद्यतकर समीक्ष्य तज्जाया हरिणामपि पत्युभक्त्या निजशिरोदानायोद्यतकर्ता समीक्ष्य धर्मचारिणी व्याधी लज्जिता केन हेतुना? यतोऽय हरिणो दाता, एव च हरिणा पतिभक्ता दातृजाया, मत्का तस्तु याचक अह च याचकजाया वरमेव पशवो न वय मनुष्या इत्यभिप्रायेण लज्जितेति प्रथमोऽर्थ ॥ अथवा व्याधजायाया पूर्वपरिणीतपुरुषो मृत, स च विद्यमान सगृहीतो द्वितीय पुरुष, त च विलोक्य चिन्तितवती यतो निजकान्तवियोगासहिष्णु शिरोदानायोद्यतपतिभक्ता वरमिय हरिणी अह च परिणीतप्रियमरणेऽपि जीविता सगृहीतमत्का चासती मानुषी इति लज्जितेति द्वितीयोऽर्थ ॥ अथवा इति चिन्तितवती यतो येन कर्णेन गीत श्रुत तस्य तत्तु कथमपि पुरो याचनाय करो न प्रसारितो व्याधेन नीरसस्य कठिनकुटिलस्य शृङ्गस्य तु पुर प्रसारित इत्यनुचित कृत भूपतेन कदाचिदप्यनौचित्य मम मृगयुवयसि गीतरसमनो ऽद्वयवाग्विचार स्वभावतया याचक मानविनिहितशिरोदानायोद्यत करो जात, अतो व्याधी त हरिण चतुर ज्ञात्वा त च व्याध मूर्खं ज्ञात्वैव चैतावन्चतुरपतिविलीनेन सुभगा समाव्य लज्जितेति तृतीयोऽर्थ (३१) यतोऽय गानप्रिया मृगाङ्क मृगो मदप्रयुक्त एतमाकर्णयितु चन्द्राकर्षणरेखा चन्द्रो निष्कलङ्क स्यात्, तेन मम्मुत्तमाप्य तत्र नितेत प्रियविप्रयोगे च सतापस्त्वै मे हिमाशु अतोऽस्य गाम्भीर्याद्भ्रमतो मम सुखमाप्य मा भूदित्याशयेन वीणामगासीदित्यर्थ (३२) सारिका (३३) नारिकेरफलम् (३४) आम्र (३५) वृषभ- (३६) करभ

१ रिकारो मध्ये यस्या २ सकारेणनायुक्ता ३ ककारोऽन्तो यस्या-

भूतेश्वरो दोषानिष्टकरो न धर्मनिरत कीलालपो नासुर । नृणा पृष्ठपलाशनो न पिशुन शीघ्रंगमो नो हय शश्वद्रात्रिचरो न राक्षसगण. कोऽयं सखि ब्रूहि मे ॥ ३७ ॥ सर्वस्वापहरो न तस्करगणो रक्षो न रक्ताशन सर्पो नैव बिलेशयोऽखिलनिशाचारी न भूतोऽपि च । अन्तर्धानपटुर्न सिद्धपुरुषो नाप्यागुगो मारुतस्तीक्ष्णास्यो न तु सायकस्तमिह ये जानन्ति ते पण्डिता ॥३८॥ जाता शुद्धकुले जघान पितर हत्वापि शुद्धा पुन स्त्री चैषा वनिता पितेव सततं विश्वस्य या जीवनम् । सङ्ग प्राप्य पितामहेन जनक प्रासूत या कन्यका सा सर्वैरपि वन्दिता क्षितितले सा नाम का नायिका ॥३९॥

## अपह्नुतयः

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया । पतिं बुद्ध्वा सखि तत प्रबुद्धासीत्यपूरयत् ॥१॥ रुचिरस्वरवर्णपदा रसभाववती जगन्मनो हरति । तत्किं तरुणी नहि नहि वाणी बाणस्य मधुरशीलस्य ॥ २ ॥ सीत्कार शिक्षयति व्रणयत्यधर तनोति रोमाञ्चम् । नागरिक किं मिलितो नहि नहि सखि हैमन पवन ॥ ३ ॥ काले पयोधराणामपतितया नैव शक्यते स्थातुम् । उत्कण्ठितासि बाले नहि नहि सखि पिच्छिल पन्था ॥ ४ ॥ प्रहरति न पञ्चबाण केवलमबले निमेषोऽपि । वर्षति पर न देव क्षणदायी विप्रयोगं ते ॥ ५ ॥ मधुरस्वना धूर्तोर्णा मण्याभरणा सुशोभना सुदती । मस्तकन्योचितदण्डा भिक्षो दयितास्ति किं न मे वीणा ॥ ६ ॥ गंगी भिनत्ति निद्रा तल्प न जहाति निष्ठुर दशति । चतुर किं प्राणेशो नहि नहि सखि मत्कुणव्रात ॥ ७ ॥ आदौ गृहीतपाणि पश्चादारूढजघनकटिभागा । नखमुखलालनसुखदा सा किं रामास्ति नैव भो पामा ॥ ८ ॥ नाथ विलोकय मेघं नहि नहि पाप तवातिपुण्याया । नहि कथयामि पयोधरमपसारय कञ्चुकीमुरस ॥ ९ ॥ पञ्चदशीरजनिसमा तारामणिभूषणापि कौतिल्याङ्क । चन्द्रसमा गतवसना हस्तगता स्त्री न मे वीणा ॥ १० ॥ नाथ मयूरो नृत्यति तुरगाननवक्षस कथं नृत्यम् नहि कथयामि कलापिनमिह सुखलापी प्रिये कोऽस्ति ॥११॥ अक्षरमैत्रीभाज सालंकारस्य चारुवृत्तस्य । किं ब्रूमो सखि यूनो नहि नहि सखि पद्यबन्धस्य ॥ १२ ॥ इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता । स्मरसि किं सखि कान्तरतोत्सव नहि घनागमरीतिरुदाहृता ॥ १३ ॥ तन्वा चारुपयोधरा सुवदना श्यामा मनोहारिणी नीता निष्करुणेन केनचिदहो देशान्तरादागता । उत्सङ्गोचितया तया रहितया किं जीवन प्रेक्षसे भिक्षो ते दयितास्ति किं नहि नहि प्राण प्रिया तुम्बिका ॥ १४ ॥ या पाणिग्रहलालिता सुसरला तन्वी सुवंशोद्भवा गौरी स्पर्शसुखावहा गुणवती नित्यं मनोहारिणी । सा केनापि हृता तया विरहितो गन्तुं न शक्तोऽस्म्यहं रे भिक्षो तव कामिनी नहि नहि प्राणप्रिया यष्टिका ॥ १५ ॥

## कूटानि

"केशवं पतित दृष्ट्वा द्रोणो हर्षमुपागत । रुदन्ति कौरवा सर्वे हा केशव कथ गत ॥१॥ पानीय पातुमिच्छामि त्वत्त कमललोचने । यदि दास्यसि नेच्छामि नो दास्यसि पिबाम्यहम् ॥ २ ॥ विषं भुङ्क्ष्व महाराज स्वजनै परिवारित । विना केनं विना नाभ्या कृष्णाजिनमवैष्टवम् ॥ ३ ॥ अर्जुनस्य इमे बाणा नेमे बाणा शिखण्डिन । सीदन्ति मम गात्राणि माघमासे गवा इव ॥ ४ ॥ यम पञ्ची चतुर्थी च विहस च विहाय च । अहं कथ द्वितीया स्याद्द्वितीयां स्यामहं कथम् ॥ ५ ॥ समरे हेमरेखाङ्क बाण मुञ्चति राघवे । सरावणोऽपि मुमुचे मध्येरीतिधर शरम् ॥ ६ ॥ शिरोर्पितपदद्वन्द्वा नासार्पितकरद्वया । अभूद्यक्तस्तनी नारी कथमेतद्भविष्यति ॥ ७ ॥ सुवर्णस्य सुवे

(३७, ३८) मत्कुण (३९) जलवृष्टि यत सा शुद्धजलसमुदायभूतमेघादुद्भूय स्वजननात्मोत्पादक मेघ विनाशयति, तथापि स्वय शुद्धा मत्स्यजलास्ति पितुरिव समस्तस्य जगतो जीवन च भवति, गर्भस्थिते समुद्रोदके शोषित सति तस्मान्मेघोत्पत्तिर्भवतीति समुद्रो मेघपिता सा पूर्वोक्ता जलवृष्टिर्मेघस्य पित्रा स्वपितामहीभूतेन सागरेण सह नद्यादिद्वारा संगम प्राप्य तेन सकल वर्षयित्वा पुनर्मेघोत्पत्तय एव हेतुर्भवतीति जनक प्रासूतेत्यस्याभिप्राय

१ हेमन्तर्तुसबन्धी २ पतिं विना, पक्षे-सन्तापेन ३ पङ्कयुक्त ४ भ्रूणोर्णे दिव्या, पक्षे,-भृङ्गोर्णावत्सा ५ शोभना दन्ता यस्य सा, पक्षे,-दन्तिदन्तनिर्मितालंकारवती ६ मत्कुण, पक्षे,-रक्तवर्ण ७ कन्दरोग- ८ मयूरम्, पक्षे,-मेदर्पणम् ९ मेघम्, पक्षे,-स्तनम्

१ 'म उर' इति पदच्छेद २ समीपे स्थातु योग्यया, पक्षे-अङ्कमारोढु योग्यया ३ विवाह, पक्षे,-पाणौ धारणम् ४ कुलम्, पक्षे,-वेणु ५ जले ६ मृतवत् ७ कृष्णकाक ८ भृगुपत्नी ९ यदि दासी अति नेच्छामि ना दासी अति तदा पिबाम्यहमिति पदच्छेद १० विगत ककारो यस्मात् ११ ककारेण विना १२ नकारद्वयरहितम् १३ कृष्णाजिनम् अत्र नकार ककारनकाराणां त्यक्तानने 'क आजि अम्' इति स्थिते संधौ कृते 'राजम्' १४ शत्रुरहितम् १५ 'माघमासे' प्रोक्ता तदपत्यानि सेवन्त्युक्त वर्तमा अपत्यानि यथा जन्मसमये तस्या अङ्गानि विदर्बहिर्यान्ति तद्दिमे बाणा ममाङ्गानि विदारयन्तीत्यर्थ १६ हर्षं भिन्नं १७ मध्यभागे रीति पित्तल तद्विशिष्टम्, पक्षे,-नवे रेकारविशिष्ट शरम् शरीरमित्यर्थ १८ 'अपसारान्यानि दिक्' १९ 'नासा दारूपरि स्थिता' २० उत्तरस्ववर्णस्य २१ शोभनवर्णो नामाक्षराणि यस्य तस्य

र्णस्य [1]सुनर्णस्य च जानाति । प्रेषिता तत्र रामेण [2]सुनर्णस्य च मुद्रिका ॥ ८ ॥ निश्चितं [3]ससुर कोऽपि न [4]कुलीन [5]समे ऽमति । सर्वथा [6]सुरसबद्ध [7]काव्यं यो नाभिनन्दति ॥ ९ ॥ येनाकारि [8]पराभूतिर्दिनेनायकसूनवे । यद्गोत्रं[9]मभवान्त तन्मेऽ[10]हं श्रेयसेऽस्तु व ॥ १० ॥ विजितात्मभवद्वेषिगुरु[11][12]पादहतो जन । हिमापहामित्रधरैर्व्याप्तं व्योमाभिनन्दति ॥ ११ ॥ [13]शंकर पतितं दृष्ट्वा [14]पार्वती हर्षनिर्भरा । रुदन्ति पन्नगा सर्वे हा हा शंकर शंकर ॥ १२ ॥ हनूमति [15]हते रामे वानरा हर्षनिर्भरा । रुदन्ति राक्षसा सर्वे हा हा राम हता हता ॥ १३ ॥ वि[16]राजराजपुत्रारेर्यन्नाम चतुरक्षरम् । पूर्वार्धं तव शत्रूणां परार्धं तव सगरे ॥ १४ ॥ [17]अट्टशूला जनपदा शिवशूलाश्चतुष्पथा । प्रमदा केशशूलिन्यो भविष्यन्ति कलौ युगे ॥ १५ ॥ कुन्दकुसुमसु पश्य सरसी रुहलोचने । [18]अमुना कुन्दकुसुमेन सखि मे किं प्रयोजनम् ॥ १६ ॥ राजन्कमलपत्राक्ष तत्ते भवतु चाक्षयम् । आसादयति यद्रूप [19]करेणु करणैर्विना ॥ १७ ॥ [20]संनमण्डल माश्रित्य नगस्य वयोपिनाम् । कदाकर्णयते गीत रमया सह रङ्गराट् ॥ १८ ॥ [21]एकोना विंशति स्त्रीणां स्नानार्थं सरयू गता । विंशति पुनरायाता एको व्याघ्रेण भक्षित ॥ १९ ॥ [1]त्रैलोक्ये नोपमैतस्या सखे किमिति भाषसे । अनन्तरा सा नादिर्वा न तृतीयेति मे मति ॥ २० ॥ [2]सुवर्णालंकृता कन्या हेमालकारवर्जिता । [3]सा कन्या [4]विधवा जाता गृहे रोदिति तत्पति ॥ २१ ॥ अहं च त्वं च राजेन्द्र [5]लोकनाथावुभावपि । बहुव्रीहिरहं राजन्षष्ठीतत्पुरुषो भवान् ॥ २२ ॥ [6]अप पिबन्प्रपापालीमनुरक्तो विलोकयन् । अगस्त्यं चिन्तयामास चतुर सापि सागरान् ॥ २३ ॥ [7]अत्र नान्तमपि [8]क्षीनं मन [9]सान्त न पश्यति । किं चित्र लोकजनक [10]वाक्कान्ता नैत[11]कान्तकम् ॥ २४ ॥ [11]अर्धरात्रे दिनस्यार्धे अर्धचन्द्रेऽर्धभास्करे । रावणेन हृता सीता कृष्णपक्षे सिताष्टमी ॥ २५ ॥ [12]शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपु । रिपुगर्भस्य यो भर्ता स मे विष्णु प्रसीदतु ॥ २६ ॥ [13]कं[13]हमस्मि गुहावक्ति प्रश्नेऽमुष्मिन्कि-मुत्तरम् । कथमुक्त न जानामि कदर्थयसि यत्सखि ॥ २७ ॥ विहगो[14] वाहन येषां त्रिकचर्वरपाणय । [16]पौमालसहिता देवा सदा तिष्ठन्तु ते गृहे ॥ २८ ॥ शस्त्र [17]नं खलु कर्तव्य

१ अशीतिरक्तिकापरिमितस्य २ काञ्चनस्य ३ सुरया मन्त्रि मद्यप इत्यर्थ, पक्षे,-ससुर इति पदच्छेदे सुरो देव ४ मत्कुल प्रसून, पक्षे,-कुलीन ५ सभे सार्थी भ्रमति श्रद्धारहित इति यावत्, पक्षे,-समे विष्णौ गतिर्यस्य स ६ शोभनरसविशिष्ट बद्ध रचितम्, पक्षे,-असुरै सबद्ध शुक्रम् ७ कविकृतिम्, पक्षे,-शुम्भ् ८ परानय, पक्षे,-परा उत्कृष्ट भूतिरैश्वर्यम् ९ कर्णाय सुग्रीवाय यमाय च १० गोत्रापन्ते वे गोपान्त्रामात्मभवा गोपिकास्तासां कान्त मनोहरम् अथ च गोत्राया पृथ्व्या आत्मभवा सीता सा कान्ता यस्य तत् अथ च गोत्रस्य हिमालयस्यात्मभवा पार्वती सा कान्ता यस्य तत् ११ कृष्णाख्य रामाख्य शिवाख्य च १२ विना गरुत्मतानाद्रणमये जित इन्द्रस्तत्रात्मभवोऽर्जुनस्तद्वेषी कर्णस्त द्गुरु पिता सूर्यस्तत्पादस्तत्किरणास्तत हिमापहोऽग्निस्तन्मित्र पानीय वहति मेघ सूर्यकिरणसतप्तो जनो मेघाच्छन्नमाकाशमभि नन्दतीति तात्पर्यार्थ १३ श्रेष्ठचन्दनम् १४ पवनगामिनी स्त्री भित्ति १५ हते आरामे रावणस्योद्याने दाहिते सतीत्यर्थ १६ वय पक्षिणस्तेषा राजा गरुडस्तद्राजा विष्णुस्तत्पुत्रो मदनस्तदारि शिवस्तस्य चतुरक्षर नाम 'मृत्युंजय' इति तत्पूर्वार्धं मृत्युरिति सगरे तव शत्रूणाम् उत्तरार्धं जय इति तव १७ 'अट्टमन्नं शिवो वेदो ब्राह्मणश्च चतुष्पथ । केशो भग इति प्रोक्त शूलो विक्रय उच्यते ॥' इति १८ मुकाररहितेन मुकुन्दकुसुमेनेति यावत् १९ करेणु कर णैर्विना ककार रेफ णकारैर्विना यद्रूपमासादयति प्राप्नोति तत्तेऽक्षय भवत्वित्यन्वय उच्चार्यमानवर्णत्रयरहितम् 'अ ए उ' इति स्वरत्रयम् तत्र अ ए इत्यत्र वृद्धौ ऐ उ इत्यत्र आयादेशे 'आयु' इति सिद्धम् २० हस्सकालस्य मण्डलमाश्रित्य हे कन्ये मेरा सा स्तन गायति सा कुरु यतो रङ्गराजनाथो रमया सह वयोपिती गीतमाकर्णयत इत्यर्थ २१ एकोना इति विंशतेर्विशेषणेन विरोध एको ना नर इति पदच्छेदेन परिहार

१ काश्चित्स्वनायिका स्तौति त प्रति अन्या प्रतिभाषते हे सखे एतस्यास्त्रैलोक्ये उपमा नास्तीति किमिति कुतो भाषसे यत सा उपमैव अनन्तरा मध्यवर्णरहिता उमेति यावत् अथवा सैव रमा अनादि आद्यवर्णरहिता मा लक्ष्मीरिति यावत् उपमा उपमानम स्तीति भाव तृतीया नास्तीति मे बुद्धि २ सुपुवर्णेन कान्त्यालंकृता ३ विद्वदित्यर्थ ४ विविधा धवा पतयो यस्या सा कुलटेत्यर्थ ५ बहुव्रीहिपक्षे,-लोका जना नाथा स्वामिनो यस्यैवंविधोऽहम् याचकत्वात् षष्ठीतत्पुरुषपक्षे,-लोकाना जनाना नाथ एवंविध स्त्वम् राजत्वेन पालकत्वात् ६ समुद्रमपि करे चुलुकयतो मुने सामर्थ्य मम चेत्स्यात्तर्हि झटिति तृष्णाया अभावाच्चिरमेना पश्या मीति पान्थाभिप्राय यदि चतुर सागरा संनिहिता स्युस्तदान वरत जलधारा विसृजन्ती चिरमेतद्दर्शनसुखमनुभवेयमिति प्रपापा ल्यभिप्राय ७ न विद्यतेऽन्तो यस्य तत्, पक्षे-नकारान्तम् ८ अन्तेन सहितम्, पक्षे,-सकारान्तम ९ बकारोऽन्ते यस्या, पक्षे-कान्ता रमणी १० अकस्य दुःखस्यान्तक नाशकम्, पक्षे,-नकारान्त न भवतीति तत् सान्त मनो नान्त ब्रह्म न पश्यतीति युक्तमेव पर स्वय कान्ता वाक् अकान्तकमपि लोकाननवत्वात्कान्त ब्रह्म नैतीति चित्रमिति भाव ११ कृष्णपक्षे,-याष्टमी तस्य दिनस्यार्धे रावणेन सीता हृता किंलक्षणाष्टमी? अर्धरात्रे सिता पु० किं० अर्धचन्द्रे किंभूतेऽर्धचन्द्रे अर्ध भा करोति अर्धभास्करस्तस्मिन् १२ शम्या शमीवृक्षस्य गर्भोऽन्त सारस्तस्य गर्भोऽग्निस्तन्मन्थनेनो द्भूयमानत्वात्, तस्याग्न रिपुर्जल तद्गर्भो लक्ष्मीस्तस्या सागरमथनेन जन्मत्वात् तस्या भर्तेत्यादि शमीगर्भपदेन अश्वत्थ इत्यपि केचित् तदापि सुवच अश्वत्थस्यापि वह्नियोनित्वात् १३ कहमित्यत्र कथ 'स्वन्धमाम्' इति कात्यायनसूत्रेण प्राकृते यकारस्थाने हकार १४ वि गरुड, हस, गौ वृषभ १५ त्रिशूल, कम्बु चक्रम् १६ पार्वती, सावित्री, लक्ष्मी १७ नखान् लुनातीति नखलु नखच्छेदकम्

मिति पित्रा नियोजितः । तदेव शस्त्रं कृतवान्पितुराज्ञा न लङ्घिता ॥ २९ ॥ कान्ते धावय मे पादाविति भर्त्रा निवेदिता । न तया धावितौ पादौ भर्तुराज्ञा न लङ्घिता ॥ ३० ॥ देवराजो मया दृष्टो वारिवारणमस्तके । भक्षयित्वार्कपर्णानि विषं पीत्वा क्षयं गतः ॥ ३१ ॥ कुमारसंभवं दृष्ट्वा रघुवंशे मनोऽदधत् । राक्षसाना कुलश्रेष्ठो रामो राजीवलोचनः ॥ ३२ ॥ विना यौवनमार्गेण गच्छन्तौ लपितं मया । हरेः कृत्यं दर्शयता पश्येत्युक्ते न दृश्यते ॥ ३३ ॥ विनायकपतेः शत्रुस्तस्य नाम षडक्षरम् । पूर्वार्धं तव राजेन्द्र उत्तरार्धं तु वैरिणाम् ॥ ३४ ॥ कोलाकृतिरपारेवो मोरोहसो जलोदरी । कंसारिरात्तलीलो वो वाघलो भूरुलोऽवतु ॥ ३५ ॥ रामेरा मेऽतिरामेऽतिरमे रामे मनोरमे । सहस्रनामतत्तुल्यं रामनाम वरानने ॥ ३६ ॥ यथा नयति कैलासं नगं गानसरस्वती । तथा नयति कैलासं न गङ्गा न सरस्वती ॥ ३७ ॥ मोमोरामममादंह्ये हयागदलनभषः । यस्यैतानि न विद्यन्ते स याति परमां गतिम् ॥ ३८ ॥ तातेन कथितं पुत्र लेखं लिख ममाज्ञया । न तेन लिखितो लेखः पितुराज्ञा न लोपिता ॥ ३९ ॥ वासनावासुदेवस्य वासितं भुवनत्रयम् । सर्वभूतनिवासीना वासुदेव नमोऽस्तु ते ॥ ४० ॥ अविलोचनसंभूतज्योतिरुद्गमभासिभिः । सदृशं शोभतेऽत्यर्थं भूपाल तव चेष्टितम् ॥ ४१ ॥ मुद्गदाली धृतव्याली कवीन्द्र वितुषा कथम् । भक्तवल्लभसंयोगाजाता विगतकञ्चुकी ॥ ४२ ॥ अभ्रभाङ्विष्णुधामाप्य विषमाश्वः करोत्ययम् । निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥ ४३ ॥ वंति ते कबरीभारः सुमनःसङ्गास्त्रियेऽति नीलत्वात् । भवति च कलापवत्त्वान्निर्जरसेव्यः कथं न स्यात् ॥ ४४ ॥ यानि विधाविभ्युदिते पुनरेष्यामीति यदुदितं भवता । जानीतु दन्तमेतं नेदं तत्त्वेन मुग्धवधूः ॥ ४५ ॥ अधुना मधुकरपतिना गिलितोऽर्थ्यपकारदंपती येन । त्रातः स पालयेत्ता

१ नतया नम्रीभूतया २ हे देवर! अजश्छाग ३ सेतु ४ पानीयम् ५ वास ६ रघुवंशे कुलश्रेष्ठो राजीवलोचनो रामो राक्षसाना कु पृथिवीं मारयति पीडयतीति कुमारः पृथ्वीपीडक इति यावत् तादृश संभवमुद्भव दृष्ट्वा तत्र तेषा नाशे मनोऽदधत् निश्चिका येत्यर्थः ७ यौ विना पक्षिणा गरुडेन वाहनेन वनमार्गेण जलमार्गेण क्षीराब्धाविति यावत् गच्छन्तौ स्त.,अत्र वाक्ये मया लक्ष्म्या सहितस्य हरेर्विष्णोः कृत्य लपित प्रोक्तमस्ति, परं दर्शयता दर्शनं कारयन्ति तेषामत्र पश्येत्युक्ते सत्यपि अविमृश्यकारित्वात्तत्कृत्यं न दृश्यते न ज्ञायते ८ वीना पक्षिणा नायको गरुडस्तस्य पतिर्विष्णुस्तस्य ९ 'हिरण्यकशिपु' इत्यर्थः १० हिरण्य सुवर्णम् ११ कशिपुस्तल्पम् तव शत्रवो निद्रिता भवन्त्विति भावः १२ कंसारिः श्रीकृष्णो वो युष्मानवतु रक्षतु कथंभूतः कंसारिः! कोलाकृतिः, कोलकस्य सूकरस्य रूप यस्य सः पु० क०, अपारेव. अपारे संसारे अवति रक्षति तथा. यद्वा,-अपारे समुद्रे वसतीति क्षीरमः; समुद्रशायीत्यर्थः पु० क०, मोरोहसः माया लक्ष्म्याः उरो वक्षस्तत्र हंस इव हंसः पु० क०, जलोदरी जले उदके उदरं गृहं यस्यास्तीति सः पु० क०, आत्तलीलः आत्ता अङ्गीकृता लीला विलासो येन सः पु० क०, वाघलः वा निश्चयेन अघ लुनातीति सः पु० क०, भूरुलः भुवं कल्यति उद्धरतीति सः. १३ हे वरानने! अहं रामे अतिरमे कथंभूते रामे अतिरामे अतिक्रान्ता रामा येनासौ तस्मिन्नुद्दे सद्मणि पु० क०, मनोरमे मनो रमयतीति तस्मिन् यथभूतः अहम्! रामेराः राम एव रा द्रव्यं यस्य स यस्मात्कारणान्मे मम सहस्रनामभिस्तुल्यं रामनाम अत इति धारणाय । अथवा अहं रामे अतिरमे कथंभूते रामे! वरानने वरं नागनं यस्यासौ तस्मिन् उत पार्वत्याः संबोधनं वा कथंभूत रामनाम! सहस्रनामवत् सहस्रनाम तनोतीति सहस्रनामतत् 'रमन्ते योगिनो यत्र परानन्दे चिदात्मनि। अतो रामपदेनासौ परं ब्रह्माभिधीयते ॥' इति १४ गानसरस्वती यथा कैलासं नगं नयति तथा न गङ्गा न सरस्वती भासयति. १५ मोहः माया रागः मदः कामः दम्भः दोषः इति अपमार्जयज्ञुक्रमेण सरत्नम्

१ नतेन नम्रीभूतेन २ हे वासन वासयतीति वासनस्तस्य संबुद्धौ त्वं भुवनत्रयं अव रक्ष पालय कथंभूत भुवनत्रयम् सर्वभूतनिवासि सर्वाणि भूतानि निवसन्त्यस्मिंस्तत् हे असुदेव प्राणेश्वर! इना वासीना वासित स्य अन्तं कुरु हे वासुदेव! ते तुभ्य नमः अस्तु॥ अथवा असुवे न स्तौतीति असुत् तस्मै स्तोतुमशक्याय वसुभिर्दीव्यतीति वासुदेवः तस्य संबुद्धौ हे वासुदेव! अथवा वसुदेवशब्दितं शुद्धं सत्त्वं तत्र भवो वासुदेवस्तस्य संबुद्धौ ते तुभ्यं नमः अस्तु असून्ददातीति असुदेव, यद्वा, असूनां देवः असुदेवः हे असुदेव ॥ गणेशपक्षे,—हे सर्वभूतनिवासीन सर्वभूतैः सह निवासकारी रुद्रः स इन पितृत्वात्स्वामी यस्येति तथोक्तस्तथा हे अम्बासुद! अम्बा पार्वती माता तस्यै सुख ददाति तथोक्तः हे पार्वतीनन्दनेत्यर्थं तथा हे इव इ महीं वाति भक्तानुग्रहीतु प्राप्नोतीति तत्संबुद्धौ ते तुभ्य नमो ननिरस्तु त्वं भुवनत्रय त्रिलोकीं अवसि पालयसि कथंभूत भुवनत्रयम्! अवासितम्. वास आश्रयो जातो यस्येति वासितम्, न वासितं अवासितम् निराश्रयमित्यर्थः. कया अवसि? वास एवाश्रय एव नौः दुःखसागरतरणाय हेतुभूता तरी तया किं०, सुदे शोभनमदे वरदानपरायणे वरदसमूहे श्रेष्ठे इति शेषः॥ हरिपक्षे,—हे इन स्वामिन्! तथा हे अम्बासुद अम्बावन्मातृवत् सु शोभनं ददातीति हे तथोक्त तथा हे इव ई लक्ष्मी वाति प्राप्नोति स इवः तत्संबुद्धौ यद्वा,-हे अम्बासुदेव इत्येकं संबोधनपदम्, अम्बा माता असुदः प्राणदाता पिता कथ्यते तथैव लक्ष्मी वाति प्राप्नोतीति हे तथोक्त. जगता मातृत्वं पितृत्वं चेति संबोधनाभिप्रायः ते नमोऽस्तु ३ चन्द्रविकासिभिः कुमुदैरित्यर्थः ४ वक्रे भासमान. ५ आकाशम् ६ सप्ताश्व, सूर्यः इत्यर्थः. ७ संकोचन् ८ पद्मानाम्. ९ क इव सम्रेव आचरति १० पुष्पाणाम्; पक्षे,-देवानाम् ११ अ इव विष्णुरिवाचरति. १२ भव इव शिव इवाचरति १३ कलापो भूषणं तद्वत्त्वात्; पक्षे,-कलापश्चन्द्रस्तद्वत्त्वात् १४ जरदितैस्तरुणैः सेव्यः; पक्षे,-निर्जरैर्देवैः सेव्यः १५ दैवे; पक्षे,-चन्द्रे १६ धृतान्तम्; पक्षे,-उदयान्तम् १७ इदं तत्त्वेन सत्त्वेन पक्षे,-दन्ततरेन दकारान्ततरेन. १८ अरगतो धुकारो यस्याधेन १९ मधुकरपतिर्मकरपतिस्तेन. २० पकारशून्यो दंपती दन्ती सर्प-

निर्गतविकारो निनायको लक्ष्म्या ॥ ४६ ॥ उपरिगतं हि सवर्णं कृत्वा करतो ददामि रन्तु मे । धन्य सरोजयुगल स्यकरमा स्तनयुगममथारभ्रष्टकृष्ण ॥ ४७ ॥ अच्युतभक्ति-वशादिह सममावसत्प्रसङ्गेन । सारमतेरभ्युदयति रतिरिति नैवाद्भुत किंचित् ॥ ४८ ॥ मञ्जुलश्रौ समावितगुणे क्वचि आपदाधारे । अयि सखि तत्रोपपतौ मम चेतो न त्वनीदृशे पत्यौ ॥ ४९ ॥ अयि सखि शस्त सखिवत्पतिरिति किं त्व न जानासि । शस्तोऽतिसखिवदुपपतिरित्यालि कथ त्वयापि नावोधि ॥ ५० ॥ द्वन्द्वो द्विगुरपि चाहं मद्गेहे नित्यमव्ययीभाव । तत्पुरुष कर्म धारय येनाहं स्या बहुव्रीहि ॥ ५१ ॥ दैहिरहमसहमाना निन्दति बाला दिवा निश शंभुम् । रामुमपि रामचन्द्र रामानुजमपि च पतगगतिम् ॥ ५२ ॥ स जयति चित्रचरित्रो यस्य हि वैरच रणपुष्पकरेणु । मतिपीमूर्तिमिहस्य श्रान्तोचनदपि वृषो दये हेतु ॥ ५३ ॥ रविसुतस्ततगोकर्ण श्रुतिविषयगुणाम्बरो वनालमधर । नरकशिरा जगदखिलं चिरमव्याद्-समरुस्पाणि ॥ ५४ ॥ सायकसहायवाहो मकरध्वजनियमितक्षमाधिपते । अब्जरुचिमाम्बरभे भातितगमननिप श्लोक ॥ ५५ ॥ वातात्कीतिरिरिशेऽर वो हरतान्महासुरीदयित । क्रीडमान्यानौका वार्वाहामोऽसमसाना ॥ ५६ ॥ लम्बोदर तव चरणादरतो यो न पूजयति । स भवति विश्वामित्रो दुर्वासा गौतमश्चेति ॥ ५७ ॥ अम्बरमम्बुनि पत्रमगति पीतमहीनगणस्य ददाह । यस्य वधूस्तनय गृहमब्जा पातु स वो हरलोचनवह्नि ॥ ५८ ॥ वायुमित्रसुतबन्धुनाहनारातिभूषणशिरोवलम्बिनी । तज्जनेरिभगिनीपते सखा पातु मा कमललोचनो हरि ॥ ५९ ॥ अतनुज्वरपीडितामिमं बाले तव सौख्याय मतो ममोपायोऽसि । रसमर्पय वैद्यनाथ नाहं मनदावेदितलङ्घने समर्था ॥ ६० ॥ शृङ्गवेरपुरीविलोकन न धरासुतकर कदाचन । अथ तत्प्रतिकारहेतवे दमयन्तीपतिलोचनं मन ॥ ६१ ॥ राम सीता लक्ष्मण जीविकार्थे विक्रीणीते यो नरस्त च धिग्धिक् । अस्मिन्पद्ये योऽपशब्दान्न वेत्ति व्यर्थप्रज्ञ पण्डित त च

---

१ विगतो विकारो यस्मात्स विनायक, नायक इत्यर्थ २ कृष्णो राधिका पृच्छति उपरिगत सवर्ण समानवर्ण सरोजयुगल करतो कृत्वा मद्धस्तेन आह्लाद मे रन्तु ददामि ततो राधया तस्मिन्दातु गृहीते सति तद्वर्णेन परिगत युक्त सवर्णरहित एतादृश सरोजयुगल उरोजयुगलमेव इति धिया कमलयुग त्यक्त्वा स्तनयुगलमेव कृष्णो ऽस्पृशत् ३ इह संसारे अच्युतभक्तिवशात्सततमच्युत ममत्व गङ्गादिषु तत्प्रसङ्गेन भक्तिप्रसङ्गेन सारमते श्रेष्ठबुद्धे पुस रति प्रीति अभ्युदयति इति न किंचिदद्भुतम् ॥ व्याकरणपक्षे,—भो अच्युत म अच्युता अहीना भा प्रतिभा यस्य किंचाव किसलयवशात् स प्रसिद्धो ममाव मकारस्याभावो लोप भवतीति शेष तत्प्रसङ्गेन किसलयप्रसङ्गेन रमतेर्धातो सा रति अभ्युदयतीत्यपि नाद्भुतम् रमु क्रीडायामित्यस्माद्धातो क्तिनि अनुदात्तोपदेशेति मलोपे रतिरिति रूप सिध्यति ४ काचि विदुषितरा नायिका सखीं प्रति वदति अयि सखि तव तस्मिन्नुपपतौ मम चेत असीति शेष कीदृशे? मञ्जुश्री मञ्जु सुन्दर श्री यस्य पु० की० समावित गुणे समाविता गुणा सौन्दर्यादयो यत्र पु० की० क्वचिल्का चित्ति न आपदाधारे आपद्रहिते इत्यर्थ अनीदृशे उक्तगुणरहिते पत्यौ मम चेतो नास्तीति ॥ व्याकरणपक्षे,—उपपतौ उपपतिशब्दे मम मनोऽस्ति, की० मञ्जुल घिसंज्ञा यस्मिन् समावित 'घेर्ङिति' इति गुणो यस्य ना इति पदस्य 'आङो नास्त्रियाम्' इति सूत्रेण दिवत्स्याधारे आश्रये अनीदृशासिसंज्ञागुणादेशरहिते केवले पति शब्दे ५ अयि सखि! पति सखिवत् शस्त मित्रवद्विश्वसनीय इति त्व किं न जानासि? सखी प्रत्याह—हे आलि! उपपतिरपि अति-सखिवत् अतिशयितमित्रवत् शस्त इति त्वयापि कथ नावोधि ॥ व्याकरणपक्षे—पतिशब्द शस्त शस इति शस्त पञ्चम्यन्तात्पति द्वितीयाबहुवचनात्परं सखिवत्सखिशुल्यरूपो ज्ञेय नादेशाभावेन अन्वयात् उपपतिशब्द शस्त द्वितीयाबहुवचनात्परं अतिसखि शब्दवत् नादेशाभाव् ६ यत स्त्रीपुंस्परूपव्यक्तिद्वयात्मक ७ द्वौ गावौ यस्य ८ भावो वस्तुमात्रम् अव्ययो व्ययाभाववान् मद्गेहे कस्यापि वस्तुनो व्ययो नास्तीत्यर्थ यद्वा अव्ययीभवन अव्ययीभाव ९ तत्प्रसादं पुरुष! येनाह बहुव्रीहिर्बहुधान्यविशिष्ट स्यां तत्कर्म धारयेत्यन्वय समासषट्कप्रतिपादनमत्र चित्रम् १० मन्मथवाण पणाच्छम्भुम्, चन्द्रावचेरणाद्रामुम्, सत्याद्यनिबेषणाद्रामचन्द्रम् । मन्मथजनकत्वाद्रामानुजम्, वायुमक्षिनिर्दहनात्पतगारातिं गरुड निन्दितवतीति भाव

१ वर श्रेष्ठो यश्चरणकमलस्तत्र यो रेणु २ ऋषिश्रेष्ठस्य गौतमस्य पत्नीम् ३ वृष सुकृतम् ४ उत्कृष्टचरणप्रहारो गज सिंहस्य मन्त्रिणीं जनयामास वृषो वृषभस्तस्योऽन्ये हेतुरिति चित्रम् ५ न समोऽसमो विषम स वासौ रुक् च समरुक् शरीरो विषमेति लघुशरीरेण स पाणौ हस्ते यस्य स शूलपाणि शिव इत्यर्थ ६ खड्ग ७ समुद्र ८ चन्द्र ९ यश १० वातात्कीतिरिति वात अस्ति स वातात् शेषस्तस्मिन्दीति शयन यस्य स अरिस अरि चक्रं धरति स वार्वाहाम वार्वाहो मेघस्तस्येवाभाति स असमसाना असमस्त खण्डित अन शकट येन स नौका न मूर्ये ओक निवासस्थान यस्य स ईदयित ई लक्ष्मीस्तत्पतिर्विष्णु हरतु वो युष्माक क्रीडमान्या क्रीडयन्ति ता मोक्षयाथवा ता माध्या अज्ञानकृतसंसारभ्रमणानि ता महावीरहरताहिति ११ नाव शत्रु १२ मलिनवृक्ष १३ पशु १४ स कृष्णो वो युष्मान्पातु यस्याम्बर पीतम् यस्य गृहमम्बुनि यस्य पत्र वाहन अहीनगणस्मारातिर्गरुड यस्य वधूरब्जा कमला यस्य तनय हरलोचनवह्नि ददाह १५ वायु मित्रमग्निस्तत्सुत षण्मुखस्तद्बन्धुर्गजाननस्तद्वाहन मूषकस्तदराति सर्पस्तद्भूषण शिवस्तच्छिरोवलम्बिनी गङ्गा तज्जो भीष्मस्तद्वैरी शिखण्डी तद्भगिनी द्रौपदी तस्या पतिर्जुनस्तत्सखा कृष्ण १६ महान्, पक्षे,—काम, १७ लङ्घनम्, पक्षे,—समीरस्थिति- १८ भेषजम्, पक्षे,—प्रीतिम् १९ उपवासे, पक्षे,—उल्लङ्घने २० अनलका विषयेत्यर्थ २१ महत्त्काराम्, २२ अनललोचन शिवम् २३ 'जीविकार्थे चापण्ये' इत्यत्र अपण्ये इत्युक्तत्वाद्रतिकाविक्रीणीते इत्यत्रैव रामक सीतका लक्ष्मणक इति प्रयोगा एव साधव

धिग्धिक् ॥ ६२ ॥ गो[1]गजवाहनभोजनभक्ष्योद्भूतपमित्रसपत्नजशत्रो । वाहनवैरिकृतासनतुष्टा मामिह पातु जगत्त्रयजुष्टा ॥ ६३ ॥ न[2]दीज लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनु । एषोऽङ्गनावेषधर प्रमाथी जित्वाद्य य नेष्यति चाद्य गा व ॥ ६४ ॥ [3]गोकर्णगणाभरण यदीय यद्गव्यहव्यादजमाददाह । कु भेनचूडामणिरादिगन्तात्पायादपायाद्दुरगात्मजार्ध ॥ ६५ ॥ विलासिनी काञ्चनपट्टिकाया पाटीरपङ्कैर्विरही विलिख्य । तस्या [4]कपोले व्यलिखत्[5]पवर्ग [6]तवर्गमोष्ठे चरणे [7]टवर्गम् ॥ ६६ ॥ [8]काचिद्वियोगानलतप्तगात्री प्राणान्समाधारयितु लिलेख । बाह्वोर्भुजग हृदि राहुबिम्ब नाभौ च कर्पूरमय महेशम् ॥ ६७ ॥ नेतु[9]प्रयाणोन्मुखता समीक्ष्य [10]नक्षत्रमुक्तावलिमस्य कण्ठे । अधारयत्सा स तु वासराणा सख्यापरोऽभूत्सखि कोऽत्र भाव ॥ ६८ ॥ [11]गौरीक्षण भूधरजाहिनाथ पत्र तृतीय दयितोपवीतम् । यस्याम्बर द्वादशलोचनाख्य काष्ठा सुत पातु सदाशिवो व ॥ ६९ ॥ [1]पुष्पेषुमाता पुरुषायमाणा लज्जावती विश्वसृज विलोक्य । नाभीसरोजे नयन मुरारेर्वामेतर वारयति स्म चित्रम् ॥ ७० ॥ [2]भृङ्गत्रय भाति वपुष्यवेशे फलानि चत्वारि सुमानि पञ्च । कपोलपट्टक प्रमदालताया पृच्छन्ति मध्य विदुष कवीन्द्रा ॥ ७१ ॥ इन्दीवराक्ष्या स्फुटविद्रुमोष्ठ्या सकेतमुद्दिश्य वने चरन्त्या । चौरै समस्ताभरणानि हृत्वा [3]नासामणिर्नोऽपहृत किमेतत् ॥ ७२ ॥ [4]नृसिंहदेवे चलिते भरेण प्रत्यर्थिभूते क्रियते भरेण । कण्ठे कुठार कमठे ठकार शेषे ढकारस्तपने चकार ॥ ७३ ॥ [5]कुभ्रेनसुभ्रीनयनाश्रयाशद्ग्धोन्मदा [6]दर्दुरहर्षकाले । [7]स्वजन्मभक्षप्रियभोजनाशा नृत्यन्ति [8]भीमानुजगोजभाज ॥ ७४ ॥ शिरसि देवनदीं पुरवैरिण सपदि वीक्ष्य धराधरकन्यका । निबिडमानवती [9]रमणाङ्कके क्वचन चुम्बनमारभते स्म सा ॥ ७५ ॥ काचिद्विलोलनयना रमणे स्वकीये दूर गते सति मनोभवबाणखिन्ना । त्यक्तु शरीरमचिरान्म[10]लयाद्रिवातसौरभ्यशालिनमहो पिबति स्म चित्रम् ॥ ७६ ॥ [11]कान्ता रुचि

१ गवागच्छतीति गोग शिवस्तज्ज कार्तिकेयस्तस्य वाहन मयूरस्तस्य भोजन भक्ष्य सर्पस्तस्य भक्ष्य वायुस्तज्जातो हनूमांस्तस्य पातीति स तत्पसुग्रीवस्तस्य मित्र रामस्तस्य सपत्नो रावणस्तज्ज इन्द्रजित्तस्य शत्रुरिन्द्रस्तस्य वाहन ऐरावतस्तस्य वैरी सिंहस्तत्रोपविष्टा अत एव सर्वपरितुष्टा अम्बिका मा पातु रक्षतु २ भो नदीज गङ्गातनय भीष्म एष दृश्यमान अङ्गनावेषधर स्त्रीरूपधारी लङ्केशवनारिकेतु रावणवनभञ्जकहनूमद्ध्वज नगाह्वयोऽर्जुननामा नगारिसूनुरिन्द्रपुत्र गोनो कौरवा । अद्य प्रमाथी हन्ता अद्य वो युष्माञ्जित्वा गाश्च नेष्यतीत्यर्थ ३ उ शिव कु धरणि अपायाद्भागात्पायाद्रक्षतु स क गोकर्णो सर्पास्तेषा राड् वासुकि यदीय आभरणम् हूयते तद्धव्यम गोरिद गव्य, गव्य च तद्धव्य च गव्यहव्यम् गव्यहव्यमत्तीति गव्यहव्याद् वह्नि यस्य शिवस्य गव्यहव्याद्वह्निरित्यनेन त्र्यम्बकस्य तृतीयनेत्रोत्थवह्निरित्यर्थ स अज अनङ्ग आददाह यस्य तृतीयनेत्रोत्थो गव्यहव्याद्वह्नि मदन भस्मीचकारेत्यर्थ किंभूत भाना नक्षत्राणा इन स्वामी चन्द्र स एव चूडामणिर्मुकुटरत्न यस्य स पु० क० अगात्मजा पार्वती अर्धे अर्धं वा यस्य स आदिगन्तादिगन्तेभ्य आ इति दिगन्तान्त मर्यादीकृत्य आदिगन्त तस्मात् ४ चन्द्रसदृशे ५ गल ६ पवर्गस्य ओष्ठस्थानीयत्वात् ओष्ठाभ्या तव चुम्बन करिष्यामीति सूचितम् ७ तवर्गस्य दन्तस्थानत्वाद्दन्तैस्तवौष्ठौ खण्डयिष्यामीति सूचितम् ८ टवर्गस्य मूर्धस्थानत्वाद्यदि त्व रुष्टासि तर्हि त्वां शिरसा नमामीति सूचितम् ९ सर्पग्रासभीत्या प्राणा स्तनौ न निर्गमिष्यतीत्यन्वयेन बाह्वोर्भुजग लिलेख चन्द्रस्य समागमयात् श्रुतिसिद्धमृगाणां मनो मद्धीतुमगच्छेदित्यान्वयेन हृदि राहुम्, मन्मथप्रसाद शिव च लिलेखेति भाव १० नक्षत्रमालाधारणेन नक्षत्रोन्यत्वेनायातमनस्य कायमिति तया सूच्यते वासरसख्याकरणेन सखिदिन एव मया गम्यत इति तेन सूचितम् ११ स सदाशिवो वो युष्मान्पातु स क । यस्य गौ वृषभ पत्र रथ तथा ईक्षण तृतीय यस्य भूधरजा पार्वती दयिता यस्य अहिनाथ शेष उपवीत यस्य अम्बर वस्त्र दिशो यस्य द्वादशलोचनाख्य कुमार सुतो यस्य इत्यन्वय ।

१ पुष्पेषोर्मदनस्य माता लक्ष्मी पुरुषायमाणा पुरुषवदाचरन्ती विपरीतरत कुर्वतीत्यर्थ , विश्वसृज भगवन्नाभिसरोजस्थ ब्रह्माण विलोक्य लज्जावती सती मुरारेर्दक्षिण नयन वारयति स्म यतो भगवन्नेत्रे हि सूर्यचन्द्रात्मके, तत्र दक्षिणस्य सूर्यात्मकत्वात्तद्वारणेन सरोज मुकुलित भवेत् ततश्च ब्रह्मापि सरोजकोशेऽन्तर्हितो भवेत् इति मनसि कृत्वा तद्वारयामासेति भाव २-३ उपरि अक्ष्णो नीलच्छाया अधस्तादोष्ठस्य रक्तवर्णच्छाया तयो प्रतिबिम्बित नासामौक्तिक गुञ्जाफलमिति मत्वा चोरैर्न हृतम् इत्यभिप्राय ४ नृसिंहदेवे सेनया सह यानार्थं चलति प्रत्यर्थिभूतै शत्रुभूपतिभि सेनाभि सह पलायमानैर्भरेण साध्वसाधिक्येन कण्ठे कुठार क्रियते कुठारघातपीडानुभूयते तथा च भरेण सेनासमूहगुरुत्वेन कमठे ठकार क्रियते भूभारधर कूर्मावतारोऽङ्गसंमर्दभीत्या पाणिपादमुखसकोचेन ठकारतुल्योऽभूत् तथा केवल मण्डलाकृतिस्तस्थौ तथा शेषोऽपि फणिसमूह एव भुव प्रदेशोऽधिकभरेण ढकारतुल्यो वक्रीकृतग्रीवकुण्डलितोऽभूत् तपने सूर्ये च चकार समुच्चय क्रियते अतिभीत्या तेषा धूलिभि शतसूर्यं नभस्तल पश्यता इत्यर्थ ५ कु पृथ्वी धरति ते कुभ्रा पर्वतास्तेषामिन स्वामी हिमाचलस्तस्य सू पुत्री पार्वती ता भ्रीणाति प्रीणाति महादेवस्तस्य नयनस्य आश्रयाग्नो नेत्रवह्निस्तेन दग्धो य कन्दर्पस्तेन उन्मदा उन्मत्ता ६ दर्दुराणा मण्डूकानां हर्षकाले वर्षाकाले इत्यर्थ ७ स्वस्माज्जन्म येषा तानि स्वजन्मानि स्वापत्यानि तानि भक्षयन्ति ते स्वजन्मभक्षा सर्पास्त एव प्रिया भोजनस्य आशा येषां ते तथोक्ता मयूरा इत्यर्थ ८ अत्र भीमानुजगोजभाज इत्यस्य भीमानुजोऽर्जुनस्तत्संज्ञका ये गोजा गो पृथिव्या जायन्ते ते गोजा वृक्षास्तान्भजन्तीति स्फुटितार्जुनवृक्षा येनाधिष्ठिता इति यावदित्यर्थ स्पष्टीकरणे टीकाकाराणामत्यल्पत्वेऽपि न्यूनैव ९ सविषे गले १० मलयस्य चन्दनवनमार्गस्थितत्वेन मलयानिलस्य सर्पनिश्वासाच्छादितसर्पसंपृक्तस्य वायो सन्निपतितत्वाद्रसनेन दष्टीकृत्य मरण स्यादिति बुद्ध्या न पपौ विति गूढाशय ११ कान्तायां हरे रुचि धत्ते, मुनिजनो हरे रुचि धत्ते, अवियोगी तरुणो हिमकरे रुचि धत्ते कामो मकरे निजचिह्नभूते रुचि धत्ते, रसमग्निजज्वालाकरेण मकरे कुचभूषणेन सह पयोधरयुगे च रुचि धत्ते

मुनिजनतरुणोऽवियोगी कामश्च रत्नमणिरुज्ज्वलकङ्कणेन । धत्ते पयोधरयुगे कुचभूषणेन हारं हरं हिमकरे मकरे करे च ॥ ७७ ॥ विकसति नयनाभ्यां कैरवं पङ्कजं च क्षपयति चरणाम्बु ब्रह्मचर्यं पयोधेः । उरसि लसति यस्य श्रेयसां संप्रदायः स फणिनमधिशेते पद्मया पद्मनाभः ॥ ७८ ॥ अहिरिपुपतिकान्तातातसंबद्धकान्ताहृतनयनिहन्तृप्राणदातृध्वजस्य । सखिसुतसुतकान्तातातसंपूज्यकान्तापितृशिरसि पतन्ती जाह्नवी नः पुनातु ॥ ७९ ॥ उदितवति परस्मिन्प्रत्यये शास्त्रयोनौ गतवति विलयं च प्राकृतेऽनिप्रपञ्चे । सपदि पदमुदीतं केवलः प्रत्ययो यत्तदियमिति च वक्तुं कः क्षमः पण्डितोऽपि ॥ ८० ॥ हरिद्रायां राहुप्रसरपिहितेच्छापरिषदि प्रयुक्तालंकृत्यं विधुत उरुता दुर्गकुरुटीम् । यय मार्गोपेताः प्रहर इति सेनाधिपकृतामसात्येभ्यो लेख्या प्रतिदिशति सिंहक्षितिपतिः ॥ ८१ ॥ गता सा किं स्थानं पथि सह तया का स्थितवती नृपेणेत्थं पृष्टा सखि चतुरदूती स्थितवती । विलोक्यालंकारं निजमथ च शाकं नरपतिं निराकाङ्क्षं चक्रे कथय कथमेतत्प्रभवति ॥ ८२ ॥ सेनान्ते नो हारो रजतगिरिमूले न धनदः सुकेशीनां मध्ये विहरति न कामो नवयुवा । रसान्ते नैगाधिर्विबुधनगरीसीम्नि न सुरस्तथाप्यस्मिन्प्रायः सुहृदमतनु दैवं किमपि नः ॥ ८३ ॥ काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं सा तन्मूले ममयमलिखद्बाल्मन्योपरिष्टात् । गौरीनाथं पवननयं चम्पकं चास्य भावं पृच्छलार्यान्प्रति कथमिदं मल्लिनाथः कवीन्द्रः ॥ ८४ ॥ सर्वज्ञः सन्वदसि बहुधा दीयते दीयते वै दाधातूना भवति सदृशं रूपमेषां चतुर्णाम् । द्वौ दानार्थौ भवति च तथा पालने खण्डने वा नो जानीमः कथयति भवान्कस्य धातोः प्रयोगम् ॥ ८५ ॥ चञ्चद्द्वादशनीलनीरजयुतं सप्ताम्बुजोद्भासितं नित्यं षोडशशोणपद्मरुचिरं धात्रानिशं सेवितम् । क्षीराम्भोधिगृहं सहस्रदलसत्पर्यङ्कविश्रान्ति यत्पायाद्वः कमलाङ्कसङ्गिशयनं तन्नीलरोचिर्महः ॥ ८६ ॥ रामं वानरवाहिनीं पुररिपुं राहुं रवेः सारथिं कुम्भीगर्भसमुद्भवं मुररिपुं मारस्य मौर्वीरवम् । तन्वीं नूतनपल्लवैर्विरचिते शय्यातले शायिनीं सख्या वीजितना-

१ स पद्मनाभः पद्मया सह फणिनं शेषमधिशेते यस्य नयनाभ्यां चन्द्रसूर्यलक्षणाभ्यां कैरवं पङ्कजं च विकसति यस्य चरणाम्बु गङ्गाजलं पयोधेर्ब्रह्मचर्यं क्षपयति दूरीकरोति गङ्गायाः समुद्रपत्नीत्वात्, यस्योरसि श्रेयसां संप्रदायः कौस्तुभमणिर्लसति. एवंविधः पद्मनाभः फणिनमधिशेते २ अहिः सर्पस्तद्रिपुर्गरुडस्तत्पतिर्विष्णुस्तत्कान्ता लक्ष्मीस्तत्तातः समुद्रः स संबद्धो येन स रामस्तत्कान्ता जानकी तस्या हर्ता रावणस्तत्तनय इन्द्रजित्तन्निहन्ता लक्ष्मणस्तत्प्राणदाता हनूमान् स ध्वजे यस्यैतादृशोऽर्जुनस्तस्य सखा कृष्णस्तत्सुतो मदनस्तत्सुतोऽनिरुद्धस्तत्कान्ता उषा तत्तातो बाणासुरस्तेन संपूज्यः शिवस्तत्कान्ता पार्वती तत्पिता हिमालयस्तच्छिरसि पतन्ती जाह्नवी भागीरथीत्यर्थः ३ सिंहक्षितिपतिः सेनाधिपकृता लेखा अमात्येभ्यः प्रधानेभ्यः प्रति दिशति कथयति इति लेखा प्रतीति किम् यय मार्गोपेताः यय शब्देन हय लक्ष्यते प्रयुक्त इनः सेनापेता हरिद्रायां नेशायां राहुप्रसरपिहितेच्छापरिषदि सत्याम् राहुशब्देन तमः, पिहितशब्देनाच्छादनम्. इच्छाशब्देन आशा दिशा, परिषच्छब्देन मण्डलम् प्रयुक्तो योऽलंकारः हारः तस्य कृत्यं प्रहारावम् विधुत उरुता गरुतश्च उत्थवे विकाग्युताना पक्षाणां निरक्षणाम् कुक्कुटीम् कुरुटीशब्देन नगरी लक्ष्यते दुर्गनगरी प्रहर इत्यर्थः ४ कश्चिद्राजा काचिन्नायिका स्वगृहमानयत् ततश्च तद्धर्तारमागत दृष्ट्वा तां स्वगृहं प्रापयितुं दूतीमाज्ञापयति स्म सा च दूती तां स्वगृहं प्रापय्य पुना राजनिकट आगत्य स्थितवती ता प्रत्याह राजा सा किं स्वस्थान गता गतवत्या तया सह पथि मार्गे का स्थितवती एवं राज्ञा पृष्टा चतुरा दूती स्थितवती सती निजमलंकारं 'पोहोची' इति महाराष्ट्रभाषाप्रसिद्धं तथा शाकं 'मेथी' इति महाराष्ट्रभाषाप्रसिद्धं शाकविशेषं चावलोक्य तावन्मात्रेणैव नरपतिं निराकाङ्क्षमुत्तरविषये आकाङ्क्षारहितं चक्रे एतदलंकारशाकावलोकनं कथं प्रभवति राज्ञो नैराकाङ्क्ष्य संपादने कथं समर्थं भवतीति कथयेति कविप्रश्नः अत्र प्रथमप्रश्नस्य प्रापितेत्यर्थकं 'पोहोची' इति हिन्दीभाषयोत्तरम् द्वितीयप्रश्नस्य तु अहमासमित्यर्थकं 'मै थी' इति हिन्दीभाषयोत्तरमिति तात्पर्यं बोध्यम्.

१-२ प्रियनिशान्तम् ३ करण्टस्थितपुष्पसौरभ गन्धवाहो हरेर्दीप्त तद्भक्षक सर्पम् ४ पुष्पदाणो बाणार्थं हरेर्ददाति तद्वैरिणं शिवम् ५ एषः पुष्प स्वरं शोषयेदिति जन्मकाले एव भक्ष्यबुद्ध्या हर्तुं प्रवृत्तं भक्षनदनाय हनूमन्तम् ६ तन्मकरन्दं भृङ्गो हरेदिति चम्पकमलिखदिति भाव चम्पके भृङ्गा न गच्छन्तीति प्रसिद्धेः ७ त्वं सर्वज्ञः सन् बहुधा वारंवारं दीयते दीयते इति वदसि दायते इति रूप चतुर्णामपि दाधातूनां सदृशं भवति तन्मध्ये द्वौ दानार्थौ; डुदाञ् दाने, दाण् दाने, दैप्. शोधने, देङ् रक्षणे इति एकः खण्डने, दोऽवखण्डने इति एत-न्मध्ये भवान्कस्य धातोः प्रयोगं कृत्वा वदति त न जानीमः ८ तन्नीलरोचिः श्यामप्रभं महस्तेजः कृष्णलक्षणं वो युष्मान्पायात् तत्किंभूतम् कमलाङ्कसङ्गिशयन लक्ष्मीसनाथ शयनम् पु० किं० सहस्रदलसत्पर्यङ्कविश्रान्ति सहस्रफणादिव्यशयनशेषस्थितम् पु० किं०. क्षीराम्भोधिगृह दुग्धसमुद्रनिवासम् पु० किं०. धात्रा नाभिसरोरुहस्थेन ब्रह्मणा अनिशं सेवितमध्यासितम् पु० किं० षोडशशोणपद्मरुचिरं षोडशारक्तकमलमनोहरम् षोडशशोणपद्मानां विवृतिः—विष्णोश्चत्वारो हस्ताः द्वौ चरणौ तावन्त एव ब्रह्मणः द्वौ करौ द्वौ चरणौ लक्ष्म्याः इत्येवं षोडशशोणपद्मरुचिरम् पु० कि०. नित्यमनिशमपि पु० कि०. सप्ताम्बुजोद्भासितं सप्तकमलशोभितम् सप्ताम्बुजानां विवृतिः—चत्वारि मुखानि ब्रह्मणः एकं नाभिसरोरुहम् एकं विष्णोर्मुखम् एकं लक्ष्मीमुखम् इत्येवं सप्ताम्बुजोद्भासितम्. पु० कि०. चञ्चद्द्वादशनीलनीरजयुतं शोभमानद्वादशनीलोत्पलयुक्तम्. द्वादशनीलनीरजानां विवृतिः—अष्टौ नयनानि ब्रह्मणः द्वे विष्णोः द्वे लक्ष्म्याः, इत्येवं द्वादशनीलनीरजयुतम् ९ कोकिलरक्षकाकाकावशेषकत्वाद्रामम्. मलयाश्ववशेषाद्वानरवाहिनीम् मन्मथावशेषात्पुररिपुम्, चन्द्रावशेषेण राहुम्. रवेः सारथिः अरुणः तस्याप्रियापदेन रात्रिसपादनादरुणम् चन्द्रोत्पादकसमुद्रावशेषादगस्त्यम्. मन्मथोत्पादनान्मुररिपुं निनिन्देति भाव. कोकिलादीनां कामोद्दीपकत्वं रसशास्त्रे प्रसिद्धम्.

म्बुदालीरुचि । मङ्घाशाकरखण्डनो विविमुना क्षीराब्धा
तुल्य मा सातुं हालितडिनिभाङ्गवसनोऽव्या सेवक सार
वान् ॥ ९१ ॥ खेटीच्छाशिपलेहृपापडनदीप्यारोडमाजी
गणो यद्भक्तोऽनिनिपीन या कुलचणा ध्यायन्ति या
योगिन । कालामलिकपालभूखलमहादैत्येन्द्रमाथार्थिनी सा
सातूयरसा तवाघतटये स्वात्कर्ममोटी चिरम् ॥ ९२ ॥
सुदारा उत्पाडिमेखलतटी कच्छोटना विभ्रती पूता
रेमरद्धाननीलनसमा नागीन पातालगा । खाघोऽधारज
कालियारिहरिणन्यायैः समं पीडितामामोघोग्ररवाघनारण
पद मन्दाकिनी व क्रियात् ॥ ९३ ॥ जायन्ते नन सौ तयामि
च नन म्यामिरम्यसा सगमे पद्मसम्यानि पडेन सुप्यथ
शति नीप्येन तद्वज्ञमि । चन्द्रार्कन्यवच मु यस्य विबुधा
शैप्दस्य रूपाणि तज्जानन्ते यदि शक्तिरस्ति गदितु पाग्मा
मिकोऽन्यानघि ॥ ९४ ॥ सुद्रीदालिसुशालितूअरतणीगावं
सुदुग्ध घृत नीकादुहपल्लेहृपापडनडी कोरीवधारीमडा । मूला
कोठकुर्ठानरा च करिटार्टाटीदुराञ्चीमडा आदासूग्णरायता
सदिनडा कुर्वन्तु वो मङ्गलम् ॥ ९५ ॥ वौश्वारद्ध्वन
घग्घृतोद्भविरति कुनेङ्गनानिर्गणेङ्गोराढारुडुर भरेदुत्तर-
ग्रैवेयकप्राडरम् । उड्डीढुङ्नरकाग्यिघृक्विदगिमेडार्द्रानिना
च्छच्छवि स सादन्दुमदुम्दुदालिगल्कन्देनो मुदे वो
मृड ॥ ९६ ॥

---

## क्रियागुप्तादयः

### क्रियागुप्तम्

आगना पाण्डवा सर्वे दुर्योधनसमीहया । तस्मै गा च
सुवर्णं च रत्नानि विविधानि च ॥ १ ॥ निरुद्यमानरधाङ्गया
चकान्दु खसचयान् । अत्र क्रियापदं गुप्तं यो जानाति स
पण्डित ॥२॥ प्रात प्रात समुत्थाय द्वौ मुनी च कमण्डलू ।
अत्र क्रियापद वक्तुमनधिर्नलणो वय ॥ ३ ॥ ललाटतिल
कोपेत कृष्ण कमललोचन । गोकुलेऽत्र क्रिया वक्तु
मर्यादा दशवार्षिकी ॥ ४ ॥ पन्पासरसि रामेण सस्नेह
सविलासया । सीतया किं कृत सार्धमत्रैवोत्तरमीक्ष्यताम् ॥ ५ ॥
राजनवघनश्याम निस्त्रिंशाकर्ष दुर्नय । आकल्प वसुधामेता
विद्विषो घ रणे बहून् ॥ ६ ॥ कान्तया कान्तसयोगे किमकारि
नवोढया । अत्रापि चोत्तरं वक्तुमवधिर्नलगो वय ॥ ७ ॥
दामोदराय पुण्याग्रमन्युष्पमूलफलान्यपि । अत्र क्रियापद
गुप्त यो जानाति स पण्डित ॥ ८ ॥ विराटनगरे राजन्की-
चकादुपकीचकम् । अत्र क्रियापद गुप्त यो जानाति स पण्डित
॥ ९ ॥ कान्त विना नदीनीर मदमालोक्य केकिनी ।
अत्र क्रियापद गुप्त यो जानाति स पण्डित ॥ १० ॥
अम्लानपङ्कजा माला कण्ठे रामस्य सीतया । सुधा सुधा

---

१ मा कर्ममोटी चामुण्डा तवाघतटये अनहरणाय स्तात् अस्तु कथभूता सा? मामसरसा अथवा कोरसस्य रस- तेन सह वर्तमाना कथभूता मा? कापा कृष्णवर्णा भीमा भीषणा तेभ्योऽपि कराला, अतिरौद्रा इत्यर्थ- भुवि मृपा भूमुजा दुर्जना, ते च ते महान्यायश्च तेषां माथो मथन तदर्थयतीति एवंविधा तथा वा कुलक्षणा कुलक्षणा योगिन ध्यायन्ति तथा यद्भक्तो गण यस्या सेवको गण पञ्चमादनानिलपीत देवराज इव 'वर्तते' इति वाक्यशेष तमेव विशिनष्टि—खे वियतीति माटी इच्छया अश्नातीति इच्छाशी पले अपिच हृत्ता स्पृहा अस्याति पलेहृ- तथा हन्योरे कयाट् पाप सुनातीति पापड- नयोरुदयेर्यात् अन्यमाश्रीति सनी तथा हृष्यंता रोम रोम भवते इति स चासौ स च इति कर्मधारय- २ उन्नानि हरितवर्णानि तेषामालि पङ्क्ति सैव मेखला यस्या कटी भूमुर्देशा सा तथा कच्छे कन्नाये देशे उत्तानि पाकुर्णा बिभ्रती बिभ्राणा तथा पूता पावना तथा रेम शब्द न राति अद्गीकरोतीति रेमर महाम्बा सुन्दा इत्यर्थ- तथा नीनानां घना नगनानां नीरजानां पङ्क्तिनाम् हमचक वककलहसादीनामित्यर्थ मभा परिषद् मभा यस्या सा तथा पाद अम्बरदर्थ नागेन्द्र पातालगा, भोगवती इत्यर्थ तथा खा महा कालियारि हरिन्यायो वद नै मम सुदैव सुगनदित्यर्थ पीडितावगाहितेत्यर्थ तथा मा मीयत इति मा तदिन्दा, इयत्ता सू.पा हन्ते अमायो नगृणां मात्रनद ओघरव घोषोध्वनिर्यस्या मा तथा एवगुणविशिष्टा मन्दाकिनी सुतारा सुनरां उद्धारा वो युष्माक इति अत्र भवताप्याद भवतापयास्य पर्व अनम्पितु क्रियात् करोतु यद्वा—वो युष्मान् भवतापाद भवतापयमसर्वानित्यर्थ २ गत्वार्थं स्वस्त्यर्थे ३ वायु मरुत तथा इद स्वामी मकर म पवनो मकर तत्पाम ददतीति वापारेयमनपक पून स्तूनां न्यसतान विशिष्टेन कुपृथ्वी भवति तामीद्विमाम्यसूत्रत्राणा पापठी

(१) य धनसमीहया धनेच्छया आगतस्तस्मै सर्वे पाण्डवा गा च सुवर्णं च विविधानि रत्नानि च 'अदु' ददति स्म (२) निरुद्यमान्याचनो योगहीनानपि याचकान् अत्र रक्ष दुःखसचयान् व खण्डय (३) 'प्रात' इति क्रिया प्रा पूरणे लट् प्रथमपुरुषद्विवचनम् (४) 'ललाट' इति लट् बाल्ये लिट् (५) 'सखे' इति ष्णा शौचे कर्मणि लिट् (६) 'अव' इति अव रक्षणे 'घ' इति च दो अवखण्डने लोट् (७) 'अत्रापि' इति त्रपूष् लज्जायाम् कर्मणि लुङ् (८) हे दामोदर पुष्पमूलफलानि 'आय आनय इटकिटकटी इत्यत्र प्रविश्य इधा तोगाद्ग्रहणस्य लोपे रूपमिदम् उपसर्गसमभिव्याहरा आनयनार्थ कत्वम् (९) नि पक्षी कीचकाद्गो कीचकान्तर 'आट' प्राप्नोत् (१०) केकिनी मयूरी इर्दमद मेदरोति विशुनमिति यावत्. वाग्नोति 'विनानदीति' विशेषण पुन पुनरां शब्द करोतीत्यर्थ

मा माया यस्य स मुभद्गववानि गणात्प्रमथानामी गर्वा गता नन्दी तनाराहनीति भावह उमा भरि न तं भुजगामणामादिग्ग एवं स्नद ग्रैवेयक कण्ठभूषण तेन अमर । श्राभ । तथा उड्डामीशस्य कह यस्य स नरकासामित्याग विनत इमानां हस्तिनामिरि नन्दोङ्गित देवाच्छा दधिर्येषु मृद ... सुरसाद ... 'मयू भुवि' इत्यस्य लोटो रूपम् अमु विपचे यस्य ते ... स्याद्दशा अम्बुदा यथाम्भोगमार्गमा ... कण्ठच्छविरस्य ...

अमन्त्यत्र प्रत्यक्षेऽपि क्रियापदे ॥ ११ ॥ नारसिंहाकृतिं वीक्ष्य वने मत्तमतंगजः । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १२ ॥ संध्यावन्दनवेलाया तडागान्ते द्विजोत्तमैः । अत्र क्रियापदं गुप्तं यो जानाति स पण्डितः ॥ १३ ॥ पुंस्कोकिलकुलस्वैते नितान्तमधुरारवैः । सहकारद्रुमा रम्या वसन्ते कामपि श्रियम् ॥ १४ ॥ बिम्बाकारं सुधाधारं कान्तावदनपङ्कजम् । अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १५ ॥ राघवस्य शरैर्घोरैर्घोररावणमाहवे । अत्र क्रियापदं गुप्तं मर्यादा दशवार्षिकी ॥ १६ ॥ पामारागाभिभूतस्य श्लेष्मव्याधिनिपीडित । यदि ते जीवितस्येच्छा तदा भोः शीतलं जलम् ॥ १७ ॥

## कर्तृगुप्तम्

गौरीनखरसादृश्यश्रद्धया शशिनं दधौ । इहैव गोप्यते कर्ता वर्षेणापि न लभ्यते ॥ १८ ॥ अन्नवस्त्रसुवर्णानि रत्नानि विविधानि च । ब्राह्मणेभ्यो नदीतीरे ददाति व्रज सत्वरम् ॥ १९ ॥ राक्षसेभ्यः सुतां हृत्वा जनकस्य पुरीं ययौ । अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ २० ॥ श्यामौ तव स्तनावेतौ पिबन्ति सततं मुदा । अत्र कर्तृपदं गुप्तं मर्यादा दशवार्षिकी ॥ २१ ॥ व्ययवासाः पञ्चशिरा यतिर्वनारिभूषणः । असिरोमा क्रियादुर्वः शङ्कलायनवीक्षणः ॥ २२ ॥ व्यामोहं तव भिन्दन्तु छिन्दन्तु दुरितानि च । कर्तृगुप्तमिमं श्लोकं ये जानन्ति विचक्षणाः ॥ २३ ॥ न करोति नाम रोपं न वदति परुषं न हन्त्ययं शत्रून् । रञ्जयति महीमखिलां तथापि धीरस्य वीरस्य ॥ २४ ॥ शरदिन्दुकुन्दधवलं नगपतिनिलयं मनोहरं देवम् । यैः सुकृतं कृतमनिशं तेषामेव प्रसादयति ॥ २५ ॥

## कर्मगुप्तम्

शीकरासारसंवाहिसरोजवनमारुतः । प्रक्षोभयति पान्थस्त्रीनिःश्वासैरिव मांसलः ॥ २६ ॥ सुभग तवाननपङ्कजदर्शनसंजातनिर्भरप्रीतेः । शमयति कुर्वन्दिवसः पुण्यवतः कस्य रमणीयः ॥ २७ ॥ एहि हे रमणि पश्य कौतुकं धूलिधूसरतनुं दिगम्बरम् । सापि तद्वदनपङ्कजं पपौ भ्रात रुक्तमपि किं न बुध्यते ॥ २८ ॥

## करणगुप्तम्

पूतिपङ्कमयेत्यर्थं कासारे दुःखिता अमी । दुर्वारा मानसं हंसा गमिष्यन्ति घनागमे ॥ २९ ॥ अहं महानसायात कल्पितो नरकस्तव । मया मांसादिकं भुक्तं भीमं जानीहि मा वक ॥ ३० ॥

## संप्रदानगुप्तम्

अम्भोरुहमये स्नात्वा वापीपयसि कामिनी । ददाति भक्तिसंपन्ना पुत्रसौभाग्यकाम्यया ॥ ३१ ॥ प्रशस्त्यायुक्तमार्गस्य तव संमानितां श्रिताः । स्पृहयन्ति न के नाम गुणरत्नालय प्रभो ॥ ३२ ॥

## अपादानगुप्तम्

शिलीमुखैस्त्वया वीर दुर्वारैर्निर्जितो रिपुः । बिभेत्यन्तमलिनो वनेऽपि कुसुमाकुले ॥ ३३ ॥ सरसीतोयमुद्धृत्य जनः कंदर्पकारकम् । पिबत्यम्भोजसुरभि स्वच्छमेकान्तशीतलम् ॥ ३४ ॥

## संबन्धगुप्तम्

तूणेव मधुमासेऽस्मिन्सहकारद्रुमञ्जरी । इयमुन्निद्रमुकुलै र्भाति न्यस्तशिलीमुखा ॥ ३५ ॥ भानुर्वै जायते लक्ष्म्या सरस्वत्याथवा मता । अत्र षष्ठीपदं गुप्तं मर्यादा दशवार्षिकी ॥ ३६ ॥ प्राप्तमदो मधुमासः प्रबला रुक्प्रियतमोऽपि दूरस्थः । असती सनिहितेयं सहृतशीला सखी नियतम् ॥ ३७ ॥

## अधिकरणगुप्तम्

या कटाक्षच्छटापातैः पवित्रयति मानवम् । एकान्ते रोपितप्रीतिरस्ति सा कमलालया ॥ ३८ ॥ विषमानता सिद्धा सर्वस्यैव निरूष्मणः । यथात्र भस्म पश्यां च निर्वाणं हन्त्ययं जनः ॥ ३९ ॥

---

(११) 'प्रत्यक्षेपि' क्षिप्ता (१२) गज' सिंहस्याकृतिं वीक्ष्य 'नार' न जगाम. ऋ गतौ. कर्तरि लिट् (१३) हे द्विजोत्तम 'एः' आगच्छ (१४) 'अधु.' दधति स्म (१५) पूर्वोक्त कान्तावदन 'दश' चुम्बस्वेति. (१६) हे राघव! त्वं रावणं आहवे शरैः कृत्वा 'स्य' मारय इति. (१७) भो श्लेष्मव्याधिनिपीडित! यदि जीवितस्येच्छा तर्हि शीतलं जल 'मा पा.' मा पिबेति. (१८) इः कामस्तं हन्तीति 'इहा' ईश्वर इति. (१९) हे ब्राह्मण! 'इभ्य.' समृद्धः. (२०) राक्षसानां इभ्यः स्वामी रावण'. जनकस्य सुता सीता हृत्वा पुरीं लङ्कां ययौ (२१) श्यामौनवः कृष्णमार्जारा' (२२) 'उ' महादेव. (२३) उ., शिव' इ ब्रह्मा अः विष्णु' इत्यनेन त्र्यः इति जातम्. तस्य बहुवचने 'त्रयः' हर विधिहरय'. तव मोह भिन्दन्तु दुरितानि छिन्दन्तु. ये कर्तृगुप्तासे विचक्षणाः. (२४) अय पुरुषो रोप न करोति. परुषं कठोर न वदति. शत्रून् हन्ति. नामेति प्रसिद्धम्. तथापि अस्य वीरस्य 'धी' भर्जिता मही रञ्जयति. (२५) यैरनिशं सुकृतं कृतं तेषामेव 'मनः' शरदिन्दुकुन्दधवल नगपतिनिलयं देवं हर प्रसादयति.

(२६) पान्थस्त्रीनिःश्वासैर्मांसलः पुष्ट इवेत्युत्प्रेक्षा. शीकरासारसंवाहिजवनः मारुतो वेगवान्वायुः 'स.' प्रक्षोभयति (२७) दिवस' 'सु' सुखं कुर्वन् अयति गच्छति. (२८) हे रमणि! यदि कौ पृथिव्यां दुर्बालक धूलिधूसरतनु दिगम्बरं पश्य. (२९) दुष्टं वाः जलं दुर्वं, तेन 'दुर्वारा' कलुषितजलेन (३०) महच्च तत् अनः शकटं च महान तेन 'महानसा' महता शकटेन आयात. आगत. नरको मृदु- (३१) अम्भोरुहमये इत्यत्र 'अये' इः कामः तस्मै (३२) प्रशस्त युक्तमार्गस्य इत्यत्र 'प्रशस्त्यै' कल्याणाय उक्तमार्गस्य. (३३) 'अलिन' भ्रमराद् (३४) 'सरसीत.' सरोवरात्, कं जलम्. (३५) उन्निद्र- कुल्म 'ए.' इति भिन्ने पदे क्रियेते इः कामस्तस्य ए'. (३६) भा कान्ति' 'नु:' नरस्य. (३७) 'मासः' चन्द्रस्य. अदो मधु मद्य प्राप्तम्. (३८) 'प' कृष्णे 'कान्ते' भर्तरि. (३९) निषमानता इत्यत्र 'निर्गति' वष्टे निर्गतः ऊष्मा द्रव्यरूपो यस्मात्तस्य निरूष्मणः अनागत आदरभावं, शान्तमूष्मरहितमित्यर्थः.

